श्रीः

॥ शिवाभ्यां नमः ॥

श्रीमद्भारद्वाजकुलजलधिकौस्तुभमणिभिः श्रीमच्छङ्करगणांशभूतैः
चतुरधिकशतप्रबन्धनिर्मातृभिः निरस्तविविधवैदिके-
तरपाषण्डषण्डवितण्डैः श्रीमदद्वैतविद्याचार्यैः
श्रीमदप्पयदीक्षितसार्वभौमैः विरचिता

# ॥ शिखरिणीमाला ॥

## तत्कृतशिवतत्त्वविवेकाख्यव्याख्या-

सहिता

परमशिवविद्वेषिदुरुक्तखण्डनपूर्वकं परमशिव-
सर्वोत्कर्षप्रतिपादिका

श्रीमच्छम्पकारण्यवास्तव्य चतुस्तन्त्रपारावारपारीण-
महामहोपाध्यायबिरुदाङ्कितश्रीत्यागरा-
जमखिराजानुग्रहलब्धब्रह्मविद्या-
वैशद्येन श्रीगोष्ठीपुराभिजनेन

**हरिहरशास्त्रिणा**

संशोधिता

कोनेरिराजपुरग्रामवास्तव्येन

**वि. साम्बशिवार्येण**

कुम्भघोणस्थस्वकीय-
श्रीविद्यामुद्राक्षरशालायां
मुद्राक्षरैरङ्कयित्वा प्रकाश्यं प्रापिता
समुल्लसतितमाम् ।

-:(*):-

मूल्यं रूप्यद्वयम् (प्रेषणव्ययः कलाद्वयं च)

May 1895.

Price—2 Rs., *Postage As. 4.*

# ॥ अद्वैतमंजरी ॥

श्रीमते मेधादक्षिणामूर्तये नमः ॥

श्रीमदप्पयदीक्षितकृता शिवतत्त्वविवेकाख्यव्याख्यया सहिता ।

## ॥ शिखरिणीमाला ॥

॥ ॐ ॥ यस्याहुरागमविदः परिपूर्णशक्ते-
रंशे कियत्यपि निविष्टममुं प्रपञ्चम् ।
तस्मै तमालरुचिभासुरकन्धराय
नारायणीसहचराय नमः शिवाय ॥ १ ॥
आकर्णकृष्टधनुराहितमोहनास्त्र-
मारान्निरीक्ष्य मदनं कुपितस्य किञ्चित् ।
शम्भोः समाधिसमये विकसत्कृशानु-
ज्वालाकलापजटिलं नयनं स्मरामि ॥ २ ॥
सर्वविद्यालतोपघ्नपारिजातमहीरुहान् ।
महागुरून्नमस्यामि सादरं सर्ववेदसः ॥ ३ ॥
निगमशिरसि निष्ठा नित्यवस्तुन्यभीप्सा
भवच्चरणसरोजे भक्तिरव्याजसिद्धा ।
त्रयमपि हृदि येषां त्रातृ संसारशोकात्
सहजमुपगतं ते सन्तु सन्तः समृद्धाः ॥ ४ ॥
पद्यैः षष्ट्या पशुपतिमहं देवमस्ताविषं यै-
रन्तस्सारैरखिलजगतामन्तरात्मानमेकम् ।
भावं तेषां प्रविशदयितुं भव्यवाचाटवाचां
वृत्तिं कुर्वे विषमविवृतिं वृद्धवर्त्मानुगानाम् ॥ ५ ॥

इह यद्यपि 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' 'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥' इत्यादिश्रुतिस्मृतिसन्दोहसम्मतिपदं निरस्तसमस्तकर्तृकर्मादिभेदप्रपञ्चमखिलवाङ्मनसपथातीतं निर्गुणं शिवतत्त्वं न स्तुतिगोचरीकर्तुं शक्यं, तथापि 'मा-

१- 'शाश्वतम्' इति पाठान्तरम् ।

यां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' 'अमूर्तं यत् परं ब्रह्म साकारं श्रुतिचोदितम् । सर्वव्यापि सदा नित्यं सत्यं द्वैतविवर्जितम् ॥ तस्येदमैश्वरं रूपं चन्द्रखण्डावतंसकम् । तमालश्यामलगलं लसत्फालविलोचनम् ॥' इत्यादिश्रुतिस्मृतिशतसम्प्रतिपन्नं स्वाधिष्ठितानिर्वचनीयमायाकल्पितगुणादिविभागम् अज्ञाव्ययाद्यनन्तमाङ्गल्यगुणमणिगणरत्नाकरं नीलकण्ठत्वविरूपाक्षत्वादिविशिष्टशुद्धसत्त्वमयविविधविग्रहविभ्राजमानं शिवभवरुद्रमहेश्वरमहादेवाद्यनन्तपर्यायविख्यापितमहिमविलासं सकलभुवनसृष्टिस्थितिसंहारकारणं राजसादिवृत्त्युपाधिपरिकल्पितस्वांशरूपाणां विधिहरिगिरिशानामपि नियन्तृमूलम् उन्मनान्तसकलभुवनातीतसोमलोकाख्यपरमशिवपुरानियतविहितात्रिमानमखिलजनहृदयगुहावासमशेषकर्मफलदानस्वतन्त्रं सकलनिगमकुलदैवतमुमासहायं परमशिवशब्दितं तस्यैव सगुणं रूपं गौतमदधीच्यादिशापनिर्मूलितपरमशिवपदनलिनभक्तिलेशकलिमलमलीमसहृदयकुहरविश्रान्तदुरन्तदुरितानुबन्धतन्निन्दामुखरमुखविलकुमतिकुलमलापदूरीकरणेन शिवस्य विश्वाधिकत्वविश्वसेव्यत्वव्यवस्थापनपरैः पद्यैः स्तोतुकामः परमशिवस्वरूपमहिमविषयग्रन्थनिर्माणे तद्बोधं विनाऽनधिकारात्, तस्य च 'यमेवैष वृणुते तेन लभ्यः' 'स नो बुद्ध्या शुभया संयुनक्तु' 'ईश्वराद्ज्ञानमन्विच्छेत्' इत्यादिश्रुतिस्मृतिभिस्तत्प्रसादैकलभ्यत्वस्य प्रतिपादितत्वात्, तत्र च 'यथान्तरोपचारेण नरः स्त्रीषु प्रसीदति । तथान्तरेण ध्यानेन प्रसीदति महेश्वरः ॥' इत्यादिस्मृतिभिरन्तरनुसन्धानस्यान्तरङ्गोपायत्वेनोपदेशादिदमेव सर्वोत्कृष्टं मङ्गलमिति हृदयेनादौ कृतं ध्यानं श्लोकेन निबध्नन् प्रारिप्सितस्तोत्रव्यवस्थाप्यमर्थं सूचयति—

अथ शिखरिणीमाला प्रारभ्यते ॥

**श्रीकान्तद्रुहिणोपमन्युतपनस्कन्देन्द्रनन्द्यादयः**
**प्राचीना गुरवोऽपि यस्य करुणालेशाद्गता गौरवम् ।**
**तं सर्वादिगुरुं मनोज्ञवपुषं मन्दस्मितालंकृतं**
**चिन्मुद्राकृतमुद्रपाणिनलिनं चित्ते शिवं कुर्महे ॥१॥**

**श्रीकान्तेति ।** 'तस्मात् सह तया शक्त्या हृदि पश्यन्ति ये शिवम् । तेषां शाश्वतिकी शान्तिर्नेतरेषामिति श्रुतिः ॥' 'ध्यायेदनादिनिधनमानन्दादिगुणालयम्' इत्यादिपुराणवचनानुरोधात् ब्रह्मविद्याधिदेवतया 'सदाशिवाङ्कमारूढा शक्तिरिच्छाह्वया शिवा' इति शिवपुराणोक्तेर्भगवत इच्छाशक्तिरूपया भगवत्या हैमवत्या सहितत्वेन अनन्तकल्याणगुणगणनिधित्वेन च भगवन्तमनुसन्दधानः सकृदमनस्कसङ्कीर्तनेनापि दुरितनिकरभञ्जनार्थं 'अपि वा यश्चण्डालः शिवइति वाचं विसृजेत्तेन सह संवसेत्तेन

1. 'षडङ्ग' इति पाठान्तरम् । 2. 'कारिणां' इति पाठान्तरम् ।

सह भुञ्जीत' 'यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्' 'विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ । तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥' इत्यादिश्रुतिपुराणाभियुक्तवचनसमर्थितसकलदुरितसंहरणसामर्थ्योत्कर्षेण नाम्ना विशेष्यं निर्दिशति—**शिवामिति** । वशिधातोः इच्छाशक्तियुक्त इत्येतस्मिन्नर्थे वर्णव्यत्ययेन अर्शआदेराकृतिगणत्वात् शिवः कल्याणगुणानिकरोऽस्यास्तीत्यस्मिन्नर्थे अच्प्रत्ययान्तत्वेन च व्युत्पन्नं शब्दरूपमिहानुसन्धेयम् । तथा ह्याद्ये व्युत्पादने शाब्दिकाभियुक्तवचनम्—'हिंसिधातोः सिंहशब्दो वशा कान्तौ शिवः स्मृतः । वर्णव्यत्ययतः सिद्धौ पश्यकः कश्यपो यथा ॥' इति । द्वितीये वायवीयवचनम्—'अथवाऽनन्तकल्याणगुणैकनिधिरीश्वरः । शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥' इति । एवं 'समेधयति यन्नित्यं सर्वार्थानामुपक्रमम् । शिवमिच्छन्मनुष्याणां तस्मादेव शिवः स्मृतः ॥' इति भारतादिवचनसिद्धान्यपि व्युत्पत्त्यन्तराणीह विवक्षितानि द्रष्टव्यानि । युक्तं हि विवक्षानुसाराल्लौकिकशब्दानामनेकार्थपरत्वम् । 'प्रसन्नवदनं चारुहारकेयूरभूषितम्' इत्यादिध्यानगुणविधिमनुसृत्य विशेषयति—**मनोज्ञेति** । 'निवेश्य चेतः प्रत्यङ्गमापादाग्रमनुक्रमात् । धारयेद्वदनाम्भोजे प्रसन्नस्मितकोमले ॥' इत्यादिगुणविधिमनुसृत्य विशेषयति— '**मन्दस्मितेति** । इष्यमाणशिवमहिमबोधसिद्ध्यै गुरुमूर्त्यात्मनाऽनुसन्धत्ते—**सर्वेति** । सर्वेषां शिवज्ञानवतां गुरूणामादिगुरुं गुरुपरम्पराविश्रान्तिभूमिमित्यर्थः । उक्तं हि पातञ्जले ईश्वरं प्रस्तुत्य—'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति । उक्तं च शिवपुराणे—'प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥' इति । 'ईशानस्सर्वविद्यानां स एवादिगुरुर्बुधः । तस्य शिष्यो महाविष्णुः सर्वज्ञानमहोदधिः ॥' इति च । श्वेताश्वतरशाखिनां मन्त्रोपनिषदि च 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, तं हदेवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।' इति । यद्यप्ययं मन्त्रः शिवपर इति स्पष्टं न प्रतीयते, तथापि मन्त्रोपनिषदः कार्त्स्न्येन शिवपरत्वस्य व्यवस्थापयिष्यमाणत्वात् कौर्मे 'निवेदयति चात्मानं यो ब्रह्माणमितीश्वरे' इति शिवपूजायामात्मार्पणे विनियोगविधानात्' 'योऽग्रे मां विदधे पूर्वं ज्ञानं च प्रहिणोति मे । यत्प्रसादान्मया प्राप्तं प्राजापत्यमिदं पदम् ॥ ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः । दत्तवानखिलान्वेदान् विप्रा आत्मनि संस्थितान् ॥' इत्यादिशैवमात्स्यादिश्रुतब्रह्मादिवचनैरुपबृंहणाच्चास्य शिवपरत्वं बोद्धव्यम् । उक्तमेवार्थं तत्तन्महानुभावशिष्यविशेषोपन्यासेन स्फुटीकरोति—**श्रीकान्तेत्यादिना** । श्रीकान्ताद्याः शिवज्ञानिन उपदेष्टारः प्र-

यां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्’ ‘उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्’ ‘अमूर्तं यत् परं ब्रह्म सादरं श्रुतिचोदितम् । सर्वव्यापि सदा नित्यं सत्यं द्वैतविवर्जितम् ॥ तस्येदमैश्वरं रूपं चन्द्रखण्डावतंसकम् । तमालश्यामलगलं लसत्फालविलोचनम् ॥’ इत्यादिश्रुतिस्मृतिशतसम्प्रतिपन्नं स्वाधिष्ठितानिर्वचनीयमायाकल्पितगुणादिविभागम् अङ्गाव्ययाद्यनन्तमाङ्गल्यगुणमणिगणरत्नाकरं नीलकण्ठत्वविरूपाक्षत्वादिविशिष्टशुद्धसत्त्वमयविविधविग्रहविभ्राजमानं शिवभवरुद्रमहेश्वरमहादेवाद्यनन्तपर्यायविख्यापितमहिमविलासं सकलभुवनसृष्टिस्थितिसंहारकारणं राजसादिवृत्त्युपाधिपरिकल्पितस्वांशरूपाणां विधिहरिगिरीशानामपि नियन्तृभूतम् उन्मनान्तसकलभुवनातीतसोमलोकाख्यपरमशिवपुरनियतविहिताविर्भावमखिलजनहृदयगुहावासमशेषकर्मफलदानस्वतन्त्रं सकलविप्रकुलदैवतमुमासहायं परमशिवशब्दितं तस्यैव सगुणं रूपं गौतमदधीच्यादिशापनिर्मूलितपरमशिवपद्मनलिनभक्तिक्लेशकल्मिलमलीमसहृदयकुहरविश्रान्तदुरन्तदुरितानुबन्धतन्निन्दामुखरमुखबिलकुमतिकुलमलापदूरीकरणेन शिवस्य विश्वाधिकत्वविश्वसेव्यत्वव्यवस्थापनपरैः षष्ठ्या पद्यैः स्तोतुकामः परमशिवस्वरूपमहिमविषयग्रन्थनिर्माणे तद्बोधं विनाऽनधिकारात्, तस्य च ‘यमेवैष वृणुते तेन लभ्यः’ ‘स नो बुद्ध्या शुभया संयुनक्तु’ ‘ईश्वराज्ज्ञानमन्विच्छेत्’ इत्यादिश्रुतिस्मृतिभिस्तत्प्रसादैकलभ्यत्वस्य प्रतिपादितत्वात्, तत्र च ‘यथान्तरोपचारेण नरः स्त्रीषु प्रसीदति । तथान्तरेण ध्यानेन प्रसीदति महेश्वरः ॥’ इत्यादिस्मृतिभिरन्तरनुसन्धानस्यान्तरङ्गोपायत्वेनोपदेशादिदमेव सर्वोत्कृष्टं मङ्गलमिति हृदयेनादौ कृतं ध्यानं श्लोकेन निबध्नन् प्रारिप्सितस्तोत्रव्यवस्थाप्यमर्थं सूचयति—

अथ शिखरिणीमाला प्रारभ्यते ॥

श्रीकान्तद्रुहिणोपमन्युतपनस्कन्देन्द्रनन्द्यादयः<br>
प्राचीना गुरवोऽपि यस्य करुणालेशाद्गता गौरवम् ।<br>
तं सर्वादिगुरुं मनोज्ञवपुषं मन्दस्मितालंकृतं<br>
चिन्मुद्राकृतमुद्रपाणिनलिनं चित्ते शिवं कुर्महे ॥१॥

श्रीकान्तेति । ‘तस्मात् सह तया शक्त्या हृदि पश्यन्ति ये शिवम् । तेषां शाश्वतिकी शान्तिर्नेतरेषामिति श्रुतिः ॥’ ‘ध्यायेदनादिनिधनमानन्दादिगुणालयम्’ इत्यादिपुराणवचनानुरोधात् ब्रह्मविद्याधिदेवतया ‘सदाशिवाङ्कमारूढा शक्तिरिच्छाह्वया शिवा’ इति शिवपुराणोक्तेर्भगवत इच्छाशक्तिरूपया भगवत्या हैमवत्या सहितत्वेन अनन्तकल्याणगुणगणनिधित्वेन च भगवन्तमनुसन्दधानः सकृदमनस्कसङ्कीर्तनेनापि दुरितनिकरभञ्जनार्थं ‘अपि वा यश्चण्डालः शिवइति वाचं विसृजेत्तेन सह संवसेत्तेन

१ ‘हृदय’ इति पाठान्तरम् । २. ‘कारिणां’ इति पाठान्तरम् ।

सह भुञ्जीत' 'यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्' 'विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ । तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥' इत्यादिश्रुतिपुराणाभियुक्तवचनसमर्थितसकलदुरितसंहरणसामर्थ्योत्कर्षेण नाम्ना विशेष्यं निर्दिशति—**शिवमिति** । वशिधातोः इच्छाशक्तियुक्त इत्येतस्मिन्नर्थे वर्णव्यत्ययेन अर्शआदेराकृतिगणत्वात् शिवः कल्याणगुणनिकरोऽस्यास्तीत्यस्मिन्नर्थे अच्प्रत्ययान्तत्वेन च व्युत्पन्नं शब्दरूपमिहानुसन्धेयम् । तथा ह्याद्ये व्युत्पादने शाब्दिकाभियुक्तवचनम्—'हिंसिधातोः सिंहशब्दो वश कान्तौ शिवः स्मृतः । वर्णव्यत्ययतः सिद्धौ पश्यकः कश्यपो यथा ॥' इति । द्वितीये वायवीयवचनम्—'अथवाऽनन्तकल्याणगुणैकनिधिरीश्वरः । शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥' इति । एवं 'समेधयति यन्नित्यं सर्वार्थानामुपक्रमम् । शिवमिच्छन्मनुष्याणां तस्मादेव शिवः स्मृतः ॥' इति भारतादिवचनसिद्धान्यपि व्युत्पत्त्यन्तराणीह विवक्षितानि द्रष्टव्यानि । युक्तं हि विवक्षानुसाराल्लौकिकशब्दानामनेकार्थपरत्वम् । 'प्रसन्नवदनं चारुहारकेयूरभूषितम्' इत्यादिध्यानगुणविधिमनुसृत्य विशेषयति—**मनोज्ञेति** । 'निवेश्य चेतः प्रत्यङ्गमापादाग्रमनुक्रमात् । धारयेद्वदनाम्भोजे प्रसन्नस्मितकोमले ॥' इत्यादिगुणविधिमनुसृत्य विशेषयति— '**मन्दस्मितेति** । इष्यमाणशिवमहिमबोधसिद्धये गुरुमूर्त्यात्मनाऽनुसन्धत्ते—**सर्वेति** । सर्वेषां शिवज्ञानवतां गुरूणामादिगुरुं गुरुपरम्पराविश्रान्तिभूमिमित्यर्थः । उक्तं हि पातञ्जले ईश्वरं प्रस्तुत्य—'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति । उक्तं च शिवपुराणे—'प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥' इति । 'ईशानस्सर्वविद्यानां स एवादिगुरुर्बुधः । तस्य शिष्यो महाविष्णुः सर्वज्ञानमहोदधिः ॥' इति च । श्वेताश्वतरशाखिनां मन्त्रोपनिषदि च 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।' इति । यद्यप्ययं मन्त्रः शिवपर इति स्पष्टं न प्रतीयते, तथापि मन्त्रोपनिषदः कार्त्स्न्येन शिवपरत्वस्य व्यवस्थापयिष्यमाणत्वात् कौर्मे 'निवेदयति चात्मानं यो ब्रह्माणमितीश्वरे' इति शिवपूजायामात्मार्पणे विनियोगविधानात्' 'योऽग्रे मां विदधे पूर्वं ज्ञानं च प्रहिणोति मे । यत्प्रसादान्मया प्राप्तं प्राजापत्यमिदं पदम् ॥ ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः । दत्तवानखिलान्वेदान् विप्रा आत्मनि संस्थितान् ॥' इत्यादिशैवमात्स्यादिश्रुतब्रह्मादिवचनैरुपबृंहणाच्चास्य शिवपरत्वं बोद्धव्यम् । उक्तमेवार्थं तत्तन्महानुभावशिष्यविशेषोपन्यासेन स्फुटीकरोति—**श्रीकान्तेत्यादिना** । श्रीकान्ताद्याः शिवज्ञानिन उपदेष्टारः प्र-

सिद्धाः महाभारतकौर्मशैवसौरस्कान्दलैङ्गशिवधर्मादिषु। आदिशब्देन स्वायम्भुववायुवसिष्ठपराशरव्यासजैमिनिकाश्यपादयो गृह्यन्ते । गुरुमूर्तिचिह्नेनापि विशेषयति- चिन्मुद्रेति । पाणिर्नलिनमिवेत्युपमितसमासः । चिन्मुद्राऽभिनयसम्बन्धस्य रूपकप्रतिपक्षत्वात्। एवम्भूतं शिवं चित्ते कुर्महे ध्यायामः। अत्र श्रीकान्तेत्यादिना विशेषणेन स्तोत्रे व्यवस्थापयिष्यमाणं शिवस्य विश्वाधिकत्वं विश्वसेव्यत्वं च उपक्षिप्तं द्रष्टव्यम् ॥१॥

एवं परदेवतामनुसन्धाय व्यवस्थापयिष्यमाणसकलार्थप्रमाणभूतां परविद्यामनुसन्धत्ते—

परशिवपरोत्कर्षप्रख्यापनैकपरायणा
पवनतपनव्यासाद्युक्त्युत्करैरुपबृंहिता ।
कुमतिपरिषच्चेतःकीलायितार्थनिबन्धना
जयतु नितरामाद्या विद्या जनस्य हितैषिणी ॥ २ ॥

मूर्तित्रयातीतो मायी शिवः परशिवः। तदीयनिरतिशयोत्कर्षप्रख्यापनैकप्रवणा। पवनोक्तिर्वायुसंहिता महापुराणानामुपलक्षणम्। तपनोक्तिरादित्यपुराणमुपपुराणानामुपलक्षणम् । व्यासोक्तिर्महाभारतम् । आदिशब्देन [1]स्मृतिकल्पसूत्रशिवागमानां प्रणेतारो मनुयाज्ञवल्क्यबोधायनाश्वलायनोपमन्युकुम्भसम्भवादयो गृह्यन्ते । तथा च सकलपुराणेतिहासस्मृतिकल्पसूत्रशिवागमैरुपबृंहिता । अत एव शब्दस्वारस्योपबृंहणाभ्यामनन्यथासिद्धतयाऽन्यथानयने यतमानानामवैदिकानां हृदयशङ्कुभूतार्थसन्दर्भा सन्मार्गोपदेशेन सकलजनहितावहा परा विद्या अथर्वशिखादिरूपा जयतु लोके सर्वोत्कर्षेण प्रचरत्वित्यर्थः । अनेन स्तोत्रे व्यवस्थापयिष्यमाणं सर्वं श्रुतिमवलम्ब्यैव व्यवस्थापयिष्यते । श्रुतिवाक्यानां च कुदृष्टिनिर्णीतार्थान्तरपरत्वनिरासः शब्दस्वारस्योदाहृतोपबृंहणविरोधाभ्यां करिष्यत इति सूचितम् ॥ २॥

अथ 'यमादित्यो न वेद' इत्यादिश्रवणादमरैरप्यपरिच्छेद्यवैभवस्य परस्य ब्रह्मणः स्तुतौ स्वस्यानधिकार इत्याक्षिप्य समाधत्ते—

प्रभावं ते नालं परशिव परिच्छेत्तुममराः
नरः स्तोतुं वाञ्छन् न कथमपहास्यत्वमयताम् ।
तथापि त्वन्नामस्मृतिगुणनिकापुण्यभजनं
कुतोऽप्यस्तु द्वारादिति मतिरिह प्रेरयति माम् ॥ ३ ॥

आत्मीयवैदग्ध्यस्फुटीकरणाय नेयं शिवस्तोत्रनिर्माणे प्रवृत्तिः, येन ब्रह्मादिभिरप्यपरिच्छेद्यवैभवे तत्र मन्दानां मतिस्खालित्यस्यावर्जनीयत्वेनावश्यमपहास्यता भवेदिति तत्परिहाराय यतितव्यं स्यात् ; किं तु संसारचक्रे परिभ्रमतां विविधदु-

१. स्मृतिकल्पसूत्रप्रणेतारः मनुयाज्ञवल्क्यादयो गृह्यन्त इति पाठान्तरम् ॥

र्व्यापारविक्षिप्तचेतसां विना किञ्चिद्द्वारं शिवतन्नामचिन्तनानुवृत्तिर्दुर्लभेति 'येन केनाप्युपायेन शिवे चित्तं निवेशयेत्' इत्यादिस्मृतेर्यथाकथञ्चन शिवचिन्तनतन्नामकीर्तनानुवृत्तये। अतः सर्वथा स्वाहितमित्यादिन्यायमनुसरतो न सा दोषायेति समाध्यभिप्रायः ॥३॥

अथ स्तोत्रप्रतिपाद्यार्थविषयशिवोत्कर्षासहिष्णूनां शिवनिन्दाव्यसनिनामवैदिकानां विमतिमुपन्यस्य तेषां सद्भिर्बहिष्कार्यत्वं जन्मवैफल्यं च शास्त्रसिद्धं तावद्दर्शयति—

त्वमेवात्मन् विश्वाधिक इति जगत्सेव्य इति च
स्फुटं ब्रूते वेदस्तदपि विवदन्ते बत खलाः ।
किमेषां त्वद्द्रोहव्यसननिहतं जीवनमिदं
यदुक्तीः श्रोतॄणां मरणमुदितं निष्कृतिरिति ॥४॥

वेदः 'विश्वाधिको रुद्रः' 'शिव एको ध्येयः' इत्यादिः । **किमिति** । गर्हितमित्यर्थः । तमिममर्थं दर्शयति मन्त्रः—'अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया गृभ्णन्ति जिह्वया ससम् ।' जनेष्वन्तर्यामिभावेन तिष्ठन्तं परः परं सर्वोत्कृष्टं रुद्रं ये मनीषयेच्छन्ति अन्तर्ध्यायन्ति, ते ससं सस्यविकारभूतमन्नं जिह्वया गृभ्णन्ति गृह्णन्तीति मन्त्रस्य शाब्दोऽर्थः । ये कुतर्कव्यसनिनस्तमन्तर्नेच्छन्ति, ते पुरीषमेव जिह्वया गृह्णन्तीति 'धन्याः खलु वने वाताः' इत्यादेरिवाप्रस्तुतप्रशंसागम्येऽर्थे कटाक्षः । तथाह्युपबृंहितं पराशरेण—'अन्तरिच्छन्ति ये रुद्रं सदा वन्द्यं मनीषया । गृह्णन्ति जिह्वया ते हि रसपूर्णामृतोदकम् ॥ अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं शिवम् । पुरीषमेव गृह्णन्ति जिह्वया ते न संशयः ॥' इत्यत्राद्येन श्लोकेन मन्त्रस्य वाच्योऽर्थो दर्शितः, द्वितीयेन गम्योऽर्थः । स चेह स्वयं बाधितत्वात्तेषां गर्हितवृत्तित्वे पर्यवस्यति । महाभारते च दर्शितोऽयमर्थः—'धिक्तेषां धिक्तेषां धिक्तेषां जन्म धिगथ धिक्तेषाम् । येषां न वसति हृदये कुमतिपथविमोक्षको रुद्रः ॥' इति । अयमेवार्थो भागवतेऽपि शिवं प्रस्तुत्य—'हसन्ति यस्याचरितं हि दुर्भगाः' इति दर्शितः । तत्र दुर्भगाः दुष्टभगोत्पन्नाः सङ्कीर्णक्षेत्रजाता इत्यर्थः । एवं साङ्कर्यशङ्कामेव हृदि निधायोक्तं नागरखण्डे—'मा भूत्तस्य कुले जन्म यस्य शम्भुर्न दैवतम्' इति । एवं तेषां कुत्सितजीवनत्वोक्त्या तेषां सद्भिर्बहिष्कार्यत्वमेव सूचितम् । तच्च बहुधा प्रपञ्चितं कौर्मादिषु । **निहतमिति** । विफलितमित्यर्थः । इह बहिष्कार्यत्वात्परत्र च सर्वथैवासिद्धेरिति भावः । उक्तमेवार्थं कैमुतिकन्यायेन व्यवस्थापयति—**यदुक्तीरिति** । उक्तं हि भागवते—'कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने । छि-

न्द्यात् प्रसह्य रुशतीमसतां प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत् स धर्मः ॥' इति । अस्यार्थः—धर्मगोप्तरीशे निरङ्कुशैरुल्लङ्घितमर्यादैर्नरावमैर्दूष्यमाणे यथैकस्यापि दूषणवाक्यस्य श्रवणं न संभवति, तथा कर्णौ पिधाय सत्वरं निर्गच्छेत्, तन्निग्रहे यद्यशक्तः । शक्तश्चेत्तेषामसतां दूषणनिरतानां रसनां प्रसह्य छिन्द्यात् । बुद्धिपूर्वकशिवदूषणश्रवणशीलस्तु प्राणानपि विसृजेत्, स च प्राणत्यागः सुरापानादिनिमित्तप्राणत्यागवद्धर्म एवेति । एवं शिवदूषणश्रवणशीलानां मरणान्तं प्रायश्चित्तमिति स्थिते स्वयं शिवदूषणनिरतानां प्रायश्चित्तं न सम्भवतीति ते सर्वथा सद्भिर्बहिष्कार्या विफलितजीविताश्चेति व्यक्तम् । उक्तञ्च स्पष्टं कौर्मे ब्रह्महत्यादिसकलपापप्रायश्चित्तविधानप्रकरणे देवतान्तरनिन्दाप्रायश्चित्तविधानानन्तरं शिवनिन्दायां प्रायश्चित्ताभावः—'यः सर्वभूताधिपतिं विश्वेशं तु विनिन्दति । न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥' इति । यद्यप्यनया भङ्ग्या शिवदूषणे मरणान्तमेव प्रायश्चित्तं सूचितं भवति, 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' इत्यादौ मरणान्तप्रायश्चित्तविषयेषु स्मर्तॄणां निष्कृत्यभावव्यवहारदर्शनात्, तथापि यद्दूषणश्रवणे यत् प्रायश्चित्तं, तद्दूषणकरणे ततोऽधिकं न्याय्यमिति मरणान्तप्रायश्चित्तविधास्विह क्लेशातिशययुक्तमापततीति द्रष्टव्यम् । यत्तु कौर्मे शिवनिन्दायां प्रायश्चित्तान्तरविधानं 'चान्द्रायणं चरेत् पूर्वं कृच्छ्रञ्चैवातिकृच्छ्रकम् । प्रपन्नः शरणं देवं कृत्वा पापात् प्रमुच्यते॥' इति ॥ यच्च पाद्मे अष्टमूर्तिपर्वणि तच्छ्रवणे प्रायश्चित्तान्तरविधानं—'शिवनिन्दापरं मूर्खं यदि शासितुमक्षमः । स्वकर्णौ तोदयेत् तीव्रैरिति शास्त्रस्य निश्चयः ॥' इति ॥ एवमादिकं सर्वमधिकारिविशेषविषयत्वेन यथान्यायं व्यवस्थापनीयम् ॥४॥

एवमवैदिकान् भगवद्द्वेषिणो मूर्खान्विनिन्द्य 'एष ह्येव साधु कर्म कारयति' 'अज्ञो जन्तुरनीशोऽयम्' इत्यादिश्रुतिस्मृतिवचनान्यनुसृत्य वस्तुतो न ते निन्द्या इति वचनभङ्ग्या तानेवोपालभते—

वराकैरेतैः किं द्विपदपशुभिः कार्यमथवा
न खल्वीष्टे जन्तुर्निजाहिततदन्याचरणयोः ।
समस्तान्तर्यामी शिव शिव यथा प्रेरयसि यं
तथा कुर्वन्नज्ञः स कथमिव निन्द्यः पशुपते ॥५॥

उक्तमेवार्थमुपपत्त्याऽपि द्रढयति—

विलोक्य ह्येकैकं श्रुतिषु विधिवाक्यं विदधते
मखादौ विश्वासं निखिलनिगमान्तेषु विदिते ।

तवैश्वर्ये ताराधिपशकलचूडाल भगवन्
कथं कुर्युर्नैते यदिह न भवेयुः परवशाः ॥६॥

शिवतत्त्वस्य दुरवधारणत्वेन कर्मवैलक्षण्याद्वा मुह्यन्ति मन्दभाग्या इति प्रतिपादयन् दुरवधारणत्वमेव कैमुत्येन व्यवस्थापयति—

यमग्रे दृष्ट्वापि स्मरहर विमूढः शतधृति-
र्हरिर्वाचाऽज्ञासीत् क्षितिधरसुतायाः शतमखः।
किमन्यैर्वैकुण्ठस्तवविधियुतस्तत्र विमतौ
कथा कैव स्वामिन् जडनरवराकस्य भवति ॥७॥

यमग्रे दृष्ट्वापि विमूढ इति विशेषणं शतमखवैकुण्ठयोरपि । क्रियाकरणयोरप्युत्तरवाक्ययोरनुषङ्गः । पुरा किल नारायणनाभिनलिने स्थितः प्रजापतिर्भुवनसृष्टिस्वातन्त्र्याभिमानविवशः स्वानुग्रहार्थमायान्तमप्राकृतरूपं महादेवं दृष्ट्वाऽप्यनधिगततन्महिमावबोधः श्रीनारायणोपदेशात् कथञ्चित्तन्महिमानमज्ञासीदिति लैङ्गकौर्मसौरादिपुराणेषु श्रूयते । इन्द्रः कदाचिदन्तर्यामिबलायत्तेनासुरविजयेन सहामर्त्यैर्दृप्तः तद्दर्पशमनेन तदनुग्रहायाविर्भूतं यक्षरूपं महादेवं दृष्ट्वाऽप्यनपेतमोहस्तत्कालसन्निहितया हैमवत्या समुपदिष्टः शिवमहिमानमवैदिति तलवकारिणामुपनिषदि स्कान्दलैङ्गशैवपुराणेषु चोपाख्यायते । हरिः कदाचित् कमलासनेन श्रैष्ठ्ये विवदमानः तयोस्तत्त्वोद्बोधनाय मध्ये महालिङ्गरूपेण प्रादुर्भूतमनुपलभ्यमानमूलाग्रं शिवमाकलय्याप्यप्राप्ततन्माहिमविश्वासः परमकारुणिकस्य तस्यैवोपदेशात् सर्वातिशायि तदैश्वर्यं वेधसा सह निरचैषीदिति शैवकौर्मादिषु पठ्यते । तदिदमुपाख्यानत्रयमिह निबद्धम् ॥७॥

अथवा शिवप्रसादैकलभ्यस्तन्महिमविश्वासः, न वेदाभ्यासादिलभ्यः । अतस्तद्वैधुर्यात्तेषां तदनुदय इत्यमुमर्थं 'नायमात्मे'त्यादिमन्त्रमनुसृत्याह—

त्वयि श्रद्धा नाथ प्रवचनबलान्नैव सुलभा
न मेधाबाहुल्यान्न च विविधशास्त्रेषु घटनात् ।
प्रसादादेवैनां भव तव लभन्ते सुकृतिन-
स्ततस्ते दुर्दान्ताः कथमिव लभेरन् कुमतयः ॥८॥

अथवा शिवभक्तेर्निखिलानर्थनिवृत्तिहेतुतया सकलपुरुषार्थप्राप्तिहेतुतया च परमश्रेयोरूपत्वात् क्षुद्रेष्वपि श्रेयस्सु बहुतरविघ्नानां जनानां दैवकृतो विघ्नस्तत्रावश्यम्भावीति तत्प्रतिबन्धात् तन्निवर्तनक्षमानेकभवसञ्चितसुकृतनिकरहीनानां तत्फलोपधाननियतशिवमहिमविश्वासानुदय इत्याशयेनाह—

तव श्रीपादाब्जे कथमपि च भक्तिर्न सुलभा
निहन्त्री दुःखानां निखिलपुरुषार्थैकवसतिः ।
विना पुण्यैर्जन्मान्तरशतसहस्रेषु विहितै-
र्नरः श्रेयोमात्रं खलु बहुलविघ्नं न लभते ॥९॥

कथमपि च यत्किञ्चित्फलाभिलाषेणापीत्यर्थः । यद्यपि 'फलोद्देशेन देवेशि लघुर्मम समाश्रयः । फलार्थी तदभावे मां परित्यक्तुं क्षमो यतः ॥' इति ॥ फलोद्देशेन प्रवृत्तिर्लघूक्ता, तथाऽपि साऽपि प्रतिबन्धरहितस्य पुंसः फलसम्पादनेन विश्वासातिशयसंजननद्वारोक्तरूपां समग्रचिह्नाष्टकोपेतां सात्त्विकशिवभक्तिं प्रसूत इति साऽपि दुर्लभेत्युक्तम् ॥९॥

अथवा दधीच्यादिशापनिरपवादकलिदोषाभ्यां वा तेषां शिवोत्कर्षे विश्वासानुदय इत्याह—

विधूतान्तर्ध्वान्ता विविधभवसंपन्नसुकृताः
यतन्ते बोद्धुं त्वां यमनियमसत्कर्मनिरताः ।
दधीच्याद्यैः शप्ता गिरिश दनुसूनुप्रकृतयः
कथं ते जानीयुः कलिमलिनचित्ता हतधियः ॥१०॥

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः, शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । अन्यानि च सत्कर्माणि कलिदोषाणामपवादकानि । 'एवंविधे कलियुगे दोषाणामेकशोधनम् । महादेवनमस्कारो ध्यानं दानमिति श्रुतिः ॥' इत्यादिव्यासवचनप्रतिपादितानि, तेषु निरता इत्यर्थः । दधीचिशापः कौर्मे दर्शितः— 'एवमुक्त्वा तु विप्रर्षिः शशापेश्वरविद्विषः । समागतान् ब्राह्मणांश्च दक्षसाहाय्यकारिणः ॥ यस्माद्बहिष्कृता वेदा भवद्भिः परमेश्वरः । विनिन्दितो महादेवः शङ्करो लोकवन्दितः ॥ भविष्यध्वं त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः । निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः ॥ मिथ्याधीतसमाचाराः सदा मिथ्याभिमानिनः । प्राप्य घोरं कलियुगं कलहैः परिपीडिताः ॥ त्यक्त्वा तपोवनं कृत्स्नं गच्छध्वं नरकान् पुनः । भविष्यति हृषीकेशश्चाश्रितोऽपि पराङ्मुखः ॥' इति ॥ तत्रैव कलिदोषकीर्तनप्रकरणे—'कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै । दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥ निन्दन्ति च महादेवं तमसाविष्टचेतसः । ' इति ॥ तानेवाभिप्रेत्य सौरपुराणे पठ्यते—'पुरुषोत्तममाश्रित्य शिवनिन्दापरा द्विजाः । कलौ युगे भविष्यन्ति त्राता तेषां न माधवः ॥' इति ॥ स्कान्दे शङ्करसंहितायां शिवपूजाविधौ—'नेक्षेत पूजावेलायां नरं वत्स बहिष्कृतम् ।' इत्युक्त्वा कोऽसौ बहिष्कृत इति जिज्ञासाया-

मुक्तं—'दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः । कलावथवतरिष्यन्ति निन्दका-स्ते बहिष्कृताः ॥' इति ॥ एवं स्कान्दादिप्रतिपादिता भृग्वादिशापा अपि द्रष्टव्याः । **दन्विति** । तमोगुणाविष्टतया कलिदोषापवादकानि कर्माण्यनाद्रियमाणा इत्यर्थः । **कलीति** ।'कलौ रुद्रो महादेवो देवानामीश्वरः परः । न देवता भवेन्नृणां दैवतानाञ्च दैवतम् ॥' इति कलिदोषप्रतिपादनात् तदापादितमोहान्धीकृता इत्यर्थः ॥१०॥

ननु, किमेवं सर्वात्मना शिवमहिमविश्वासः तदनुगुणभक्त्याराधनं तदुचितफललाभश्च कस्यापि नास्ति, अस्ति भगवतो नारायणस्येति वदन् परिसङ्ख्यया शिवमहिमविश्वासादीनामतिविरलत्वं सूचयति—

**अपारं विज्ञातुं गिरिश महिमानं तव परं**
**विधातुं भक्तिं वा तव चरणयोर्नित्यमचलाम् ।**
**प्रसादं वा लब्धुं वरद तव पूजाभरविकं**
**जगत्येकः शक्तो जयति वनमाली स भगवान् ॥११॥**

प्रसादग्रहणादेव सकलवाञ्छितार्थलाभोऽप्यर्थसिद्ध इति न पृथगुक्तः । 'कृष्णद्वैपायनः साक्षाद्विष्णुरेव सनातनः । को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥ नार्जुनेन समः शम्भोर्भक्त्या भूतो भविष्यति । मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥' इत्यादिकौर्मवचनसिद्धौ विष्णोः शिवमहिमपरिज्ञानतद्भक्त्यतिशयौ । यत्तु भागवते चतुर्थस्कन्धे दक्षाध्वरे कुपितस्य शिवस्य शान्तिं प्रार्थयमानान् देवान् प्रति ब्रह्मणो वचनं—'नाहं न यज्ञो न च यूयमन्ये न देहभाजो मुनयश्च तत्त्वम् । विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य कृपां[1] विधित्सेत् ॥' इति ॥ यच्चाष्टमस्कन्धे शिवं प्रति देवानां वचनम्—'न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् । ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥' इत्येवमादीनि वचनानि कैमुतिकनयेन शिवतत्त्वस्येतरपुरुषदुर्ग्रहत्वपराणि, न तु हरेस्तदनवबोधपराणीति न विरोधः । सर्वोत्तरशिवाराधनपरत्वं तस्य, तस्मिन् शिवस्य प्रसादाधिक्यं च 'अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥' इति सौप्तिके शिववचनात् । 'देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः । सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं विभुम् ॥ तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ।' इति द्रोणपर्वणि व्यासवचनाच्च । शिवप्रसादात्तस्य सर्वोत्तरपदलाभः 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारुचित्रम्' इति शिवाभिव्यक्तिस्थानं लिङ्गं प्रकृत्य तद्विशेषयता मन्त्रवर्णेन दर्शितः—'पदं यद्वि-

१. 'क उपायं' इति पाठान्तरम् ।

ष्णोरूपमं निधायि' इति । अस्यार्थः पराशरपुराणे स्फुटीकृतः—'रौद्रं लिङ्गं महाविष्णुर्भक्त्या शुद्धं शिलामयम् । चारुचित्रं समभ्यर्च्य लब्धवान् परमं पदम् ॥' इति ॥ काशीखण्डे च चतुर्भुजाभिषेकाध्याये षष्ठाभिषेकपूर्वकं वैकुण्ठस्थानमखिलजगत्प्रभुत्वमात्मनोऽप्यधिकं शौर्यमन्यच्चानितरसुलभं वरजातं शिवेन विष्णवे दत्तमित्युपवर्णितम् । आरण्यपर्वणि च तीर्थयात्राविधौ 'ततो गच्छेत् सुपर्णाक्षं त्रिषु लोकेषु विश्रुतम् । यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत् पुरा ॥ वरांश्च सुबहून् लेभे दैवतैरपि दुर्लभान् । उक्तं च त्रिपुरघ्नेन परितुष्टेन भारत ॥ अपि चान्यैः प्रियतमो लोके कृष्ण भविष्यसि । त्वन्मुखञ्च जगत् सर्वं भविष्यति न संशयः ॥' इति प्रतिपादितम्। द्रोणपर्वणि च तपोऽध्याये मैनाके षष्टिं वर्षसहस्राणि तपश्चर्यया प्रसादितवते नारायणाय भगवता सर्वोत्तरं शौर्यादिकं दत्तमिति प्रपञ्चितम्, हरिवंशे च पारिजातसंहितायाम्—'इति संस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रसार्य दक्षिणं हस्तं वासुदेवमथाब्रवीत् ॥ मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातञ्च हर्तासि मा भूत्ते मनसो व्यथा ॥ पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥ अवध्यस्त्वमजय्यस्त्वं मत्तः शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥' इत्युक्तम् । एवं शैवलैङ्गादिप्रतिपादितमपि द्रष्टव्यम् ॥११॥

इत्युपोद्घातः ।

---

अथ श्रुत्यर्थविचारः ।

अथ शिवस्य विश्वाधिकत्वव्यवस्थापनाय तदुपाधि तत्प्रयुक्तगुणादिकञ्च दिदर्शयिषुरुपाधिविनिर्मुक्तं तात्त्विकं तावद्रूपमाह—

अनन्तं यत्प्राहुर्निरतिशयसच्चित्सुखवपुः
पराभूतद्वैतप्रकरविशदं प्रत्यगुदितम् ।
अखण्डार्थैर्वेद्यं वचननिकरैरौपनिषदै-
र्महादेव ज्योतिस्तदसि परमात्मेति विदितम् ॥१२॥

विविधास्तावद्वेदान्ताः परं ब्रह्म प्रतिपादयन्ति । केचित्तत्पदार्थनिष्ठाः, यथा—'सत्यं ज्ञानमनन्तं ब्रह्म' 'अस्थूलमनणु' इत्यादयः । केचित् त्वम्पदार्थनिष्ठाः, यथा—'योऽयं विज्ञानमयः' इत्यादयः। केचित्पदार्थद्वयाभेदनिष्ठाः महावाक्यरूपाः, यथा—'तत्त्वमसि' 'अहं ब्रह्माऽस्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्म' इत्यादयः । तद्रीतिमनुसृत्य त्वंपदार्थः प्रत्यगित्यनेन दर्शितः । तेनात्माभिमानविषयेषु देहेन्द्रियादिष्विदन्तया बाहिर्भावमापद्यमानेषु प्रातिलोम्येनान्तर्मुखतया गच्छतीव चित्तवृत्तेस्तथागमनादिति निष्कृष्टाहङ्कारो जीव इत्युच्यते । अवशिष्टविशेषणैस्तत्पदार्थो दर्शि-

तः। तत्रापि सच्चित्सुखवपुः परमात्मानन्तमिति विशेषणैः 'आनन्दादयः प्रधानस्य' इति सूत्रे उपसंहर्तव्यत्वेन प्रतिपादितानां पञ्चानामुपसंहारो दर्शितः । पराभूतेत्यादिना 'अक्षरधियाम्' इत्यादिसूत्रे उपसंहर्तव्यत्वेन निर्णीतानामस्थूलत्वादीनामिति विवेकः। उपसंहारश्चैषां निष्प्रपञ्चब्रह्मप्रतिपत्त्युपायतयेति निपुणतरमुपपादितमाचार्यैः । अन्ये तूपासनार्थमिति मन्यन्ते । 'प्रत्यगुदितम् उक्तरूपं ज्योतिरि'ति सामानाधिकरण्येन महावाक्यार्थो दर्शितः । निष्प्रपञ्चं ब्रह्म न संसर्गपरैः प्रमाणैस्सिध्येदित्यत उक्तम्—'अखण्डार्थैः' इति ॥१२॥

एवम्भूतस्यापि ब्रह्मणो लोकानुग्रहैकरसिकतया कल्पितगुणादिविभागं मायोपाधिकं सर्वोत्तरं सगुणं रूपं निरूपयति—

गुणातीतोऽपि त्वं सगुण इव मायाशबलितः
परिष्कुर्वन् साम्बं वपुरसितकण्ठं त्रिनयनम् ।
अभिख्याभिः ख्यातः शिवभवमुखाभिर्विजयसे
नियन्ता लोकानां सहरिहरपङ्केरुहभुवाम् ॥१३॥

इवकारेण गुणानां कल्पितत्वेन तत्त्वानुप्रवेशाभावं द्योतयति । इत एव नामरूपसम्बन्धस्यापि कल्पितत्वलाभ इति न पृथक्तदुक्तिः। सार्वज्ञ्यादिभिरङ्गसंज्ञैः ज्ञानवैराग्यादिभिरव्ययसंज्ञैरैश्वर्यादिभिर्भगसंज्ञैरन्यैश्च सत्यकामत्वादिभिर्गुणगणैरलंकृत इत्यर्थः । निर्गुणस्य गुणादीनामुपपादकमुपाधिमाह—मायेति । चित्प्रतिबिम्बोपाधिभूतया अविद्यात्मिकया मायया बिम्बस्थानीयत्वेनोपहितः निर्मलसत्त्वप्रधानत्वेनाविद्योपाधिभिन्नया मायया प्रतिबिम्बभावेनोपहित इति वा अर्थः। शिवेति । तद्गुणसंविज्ञानेन श्रुतिस्मृतिपुराणकोशादिप्रसिद्धानि सर्वाणि शम्भोरभिधानानि गृह्यन्ते । शिवादिभिरष्टभिर्भवादिभिरष्टभिश्चेत्यर्थो वा । यद्यप्यन्यान्यपि शम्भुशङ्करादीनि भगवतः परश्शतानि सन्ति नामानि, तथाऽपि 'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः परमात्मेत्युदाहृतः[1] ॥ एतन्नामाष्टकं पुण्यं शिवस्य परमात्मनः । रहस्यं सर्वशास्त्रेभ्यः सारभूतं समुद्धृतम् ॥' इत्यादिना रहस्यागमेषु शिवादिनामाष्टकस्य वैशिष्ट्यप्रतिपादनात् भवादिनामाष्टकस्य च आपस्तम्बीयानां मन्त्रेष्वाम्नानेन आपस्तम्बसूत्र ईशानबलौ बोधायनाश्वलायनसूत्रयोः शूलगवहोमे बोधायनसूत्रे महादेवस्य प्रतिष्ठाविधौ नित्यपूजाविधौ प्रदोषपूजाविधौ च होमतर्पणार्चनेषु विनियोगवर्णनेन च वैशिष्ट्यावगमात् प्राधान्यमभिप्रेत्य विशिष्य ग्रहणम् । अत्र केचित् गुणमूर्तिभ्यः परं सकलकारणभूतं तत्त्वान्तरं नेच्छन्ति । अन्ये तु मायामात्रोपहितमशरीरं शारीरकसूत्रव्यवहृतपरब्रह्मादिशब्दमात्रवाच्यं तदिति मन्यन्ते ।

1. 'परमात्मेति तत्त्वतः' इति पाठान्तरं ।

तदुभयदृष्ट्योमासाहित्यमुक्तं तद्रूपविग्रहग्रहणं भवशिवादिशब्दवाच्यत्वं च त्रिमूर्त्यन्तर्गतस्य गुणिरुद्रस्यैवेति तेनैव रूपेण स्तोत्रप्रतिपाद्यं ब्रह्म निर्दिष्टमिति स्यान्मतिः । तदर्थं विशेषयति—सहारिहरेति । अयमाशयः—ब्रह्मोपनिषदि तावत् 'अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठो मूर्धा । तत्र चतुष्पदं ब्रह्म विभाति । जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्तौ रुद्रः, तुरीयमक्षरमादित्यो विष्णुश्चेश्वरश्च ।' इति ब्रह्मादिभ्यः परमक्षरशब्दितं सर्वदेवात्मकं तत्त्वान्तरं दर्शितम् । तस्यैव पुनः 'न तत्र देवा ऋषयः पितर ईशते ।' इत्यनन्येश्वरत्वं 'एको देवः सर्वभूतेषु गूढः ।' इति सर्वान्तर्यामित्वं सकलकर्मफलप्रदत्वञ्च दर्शितम् । तापनीयोपनिषदि च 'अकारं ब्रह्माणं नाभौ, उकारं विष्णुं हृदये, मकारं रुद्रं भ्रूमध्ये ।' इति नाभिहृदयभ्रूमध्येष्वकारादिमात्रात्रयवाच्यानां ब्रह्मविष्णुरुद्राणामुपासनविधानानन्तरम् 'ॐकारं सर्वेश्वरं द्वादशान्ते' इति समष्टिप्रणववाच्यं द्वादशान्तोपास्यं सर्वैश्वर्यशालि तेभ्यः परं तत्त्वान्तरं दर्शितम् । मैत्रेयोपनिषदि च—'तमो वा इदमेकमास' इत्यारभ्य 'तत् परेणेरितं विषमत्वं प्रयातीत्येतद्वै रजसो रूपम्' इत्यादिना तमोऽधिष्ठातुः परस्य सङ्कल्पनाविद्यारूपस्य तमसो गुणविभागं निरूप्य 'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति । अथ योह खलु वावाऽस्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा, अथ योह खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रः । अथ योह खलु वावास्य सात्त्विकोंऽशोऽसौ स योऽयं विष्णुः ।' इति तमोऽधिष्ठातुः परस्य रजोगुणाद्युपाहिता अंशभेदा ब्रह्मादय इति प्रतिपादनेन तेभ्यः परं तत्त्वान्तरं स्पष्टीकृतम् । योगयाज्ञवल्क्ये च प्रणवतन्मात्रादेवतानिरूपणे 'अक्षरत्रयमेतत्तु कारणत्रयमिष्यते । त्रयाणां कारणं ब्रह्म भारूपं सर्वकारणम् । एकाक्षरं परंज्योतिस्तदाहुः प्रणवं बुधाः ।' इति मात्रात्रयदेवताभ्यः 'अहं ब्रह्मा च शर्वश्च जगतः कारणत्रयम् ।' इत्यादिभागवतादिपठितभगवद्वचनादिभिः कारणत्रयमिति प्रसिद्धेभ्यो गुणमूर्तिभ्यः परं प्रणवदैवतं तत्त्वान्तरं स्फुटीकृतम् । भागवतविष्णुपुराणादिषु च 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ।' 'ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः ।' इत्यादिवचनैर्मूर्तित्रयातीतं परं ब्रह्म विभावितम् । अपि च जगत्कारणं ब्रह्म तावन्मायोपाधिकचैतन्यमित्यविवादम् । ब्रह्मविष्णुरुद्रास्तु तदीयगुणविशेषोपाधिचैतन्यरूपा इत्युदाहृतमैत्रेयोपनिषद्वाक्ये 'सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी ।' इति तापनीयोपनिषदि सकलपुराणादिषु चाविवादेन प्रतिपन्नम् । ततश्चोपाधिभेदे उप-

हितभेदस्यौचित्यात् गुणमूर्तिभ्यः परं मायोपाधिकं जगत्कारणं ब्रह्मेति वज्रलेपायते । तस्य चोमासाहित्यमुक्तरूपं वपुश्च 'उमासहायं परमेश्वरं प्रभुम् ।' 'ऋतं सत्यं परं ब्रह्म' इत्यादिकैवल्योपनिषदादिमन्त्रेभ्यः प्रतिपन्नं शिवशम्भुरुद्रेशानमहेश्वरमहादेवादिशब्दवाच्यत्वञ्चाथर्वशिरोऽशिखादिदृष्टप्रयोगनिर्वचनाभ्यां निर्णीतम् । न चोदाहृतोपनिषन्निकुरुम्बप्रतिपाद्यो गुणिरुद्र इति शङ्कनीयम् । तत्र सर्वत्रापि तद्विभूतिषु ब्रह्मनारायणयोरिव गुणिरुद्रस्यापि पाठात् । न च तत्र विभूतिमध्याम्नातरुद्रपरशब्दो गुणिरुद्रांशभूतरुद्रान्तरपरोऽस्त्विति वाच्यम् । ब्रह्मविष्णुसन्निध्याम्नातरुद्रशब्दस्य संहर्तृमूलरुद्रपरत्वौचित्यात् । 'यत्साथे श्रूयते *** तत्ताद्दगवगम्यते' इति न्यायात् । ननु, तथाऽपि कैवल्यादिमन्त्राणामुपासनापरत्वादारोपितविग्रहेणाप्युपासनोपपत्तेर्न परस्य वर्णितविग्रहसिद्धिरिति चेन्न । उपासनापरेभ्योऽप्यविरोधे देवताधिकरणन्यायेन प्रतीयमानार्थसिद्धेरनिवार्यत्वात् । न च 'अपाणिपादम्' इति श्रुतिविरोधोऽप्यस्तीति शङ्कनीयम् । एवं हि निर्गुणश्रुतिविरोधात् सत्यकामादिगुणानामप्यनभ्युपगमापत्तिः । इष्टापत्तिरिति वदतां 'यथा ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति' इति व्यतिहाराधिकरणभाष्यविरोधः । मायाकल्पिता गुणास्तत्त्वतो निर्गुणत्वं न विघ्नन्तीति समाधानन्यायस्त्विहापि तुल्यः । यत्तु 'रूपोपन्यासाच्च' इति सूत्रे विग्रहोपन्यासपरत्वेन सूत्रव्याख्यानानन्तरं ब्रह्मणो विग्रहाभावात्तद्व्याख्यानमयुक्तम्मन्यमानानां परेषामन्यथा व्याख्यानमुपन्यस्तं भाष्यकारैः, तन्मुण्डकश्रुतौ निर्विशेषब्रह्मपरोपक्रमविरोधान्न विग्रहोपन्यासः सङ्गच्छत इत्यभिप्रायेण । उक्तं च तैरेवान्यत्र विग्रहसद्भावः—'स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इति । सूत्रकारेण च 'भोगमात्रसाम्यलिङ्गाच्च' इत्यहंग्रहोपासकानां ब्रह्मणश्च भोगसाम्यं वदता स्पष्टीकृतम् । शरीरसापेक्षे वैषयिकानन्दे भोगशब्दप्रसिद्धेः । नन्वसति मानान्तरविरोधेऽन्यपरशब्देभ्योऽक्षरार्थसिद्धिः । अस्ति त्विह विरिञ्चादिविग्रहत्रयव्यतिरेकेण ब्रह्मणश्चिरन्तनतुरीयविग्रहाभ्युपगमे श्रुत्यन्तरविरोधः । मैत्रेयोपनिषदि मायोपाधिकं परं ब्रह्म प्रस्तुत्य 'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति' इति परविग्रहाणां मध्ये विरिञ्चादिविग्रहत्रयस्यैवाग्र्यत्वश्रवणात् । यदि हि ततोऽपि प्राचीनं मूर्त्यन्तरं स्यात् ब्रह्मणः, कथं तेषामग्र्यत्वं भवेत् । अग्रे भवा ह्यग्र्या उच्यन्ते । अतो ब्रह्मादिमूर्तित्रयव्यतिरेकेण न परस्य तुरीया मूर्तिरस्ति । तदवलम्बेनैव च वृद्धानां ब्रह्मणो विग्रहवत्त्वव्यवहार इत्यवसीयते । अमुमेवार्थमुपोद्बलयन्त्यात्रितपश्चर्यायां भागवतवचनानि । तत्र ह्यत्रेस्तपश्चर्यां प्रस्तुत्य 'शरणं तं प्रपद्येऽहं य एव जगदीश्वरः । प्रजामात्मसमां मह्यं

प्रयत्स्यतीति चिन्तयन् ॥' इति तस्य तत्फलाभिसन्धिं चोक्त्वाऽथ चिराद्वरप्रदानाय ब्रह्मविष्णुरुद्राणां त्रयाणां तत्र सन्निधाने सति स्तुतिप्रणामाद्युपचारानन्तरं तान्प्रत्यत्रेः 'एको मयेह भगवान् विबुधप्रधानश्चित्ते कृतः प्रजननाय कथं नु यूयम् । अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयो मे ॥' इति प्रश्ने 'यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा । सत्सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायसि ते वयम् ॥' इति तेषां प्रतिवचनोपन्यासेन विरिञ्च्यादिमूर्तित्रयातिरेकेण परस्य सर्वैश्वर्याभिव्यक्तिस्थानभूतं तुरीयं मूर्त्यन्तरं नास्तीति व्यक्तीकृतम् । तत्सत्त्वे तेनैव रूपेण परस्य तत्र प्रादुर्भावापत्तेः । अन्यथा ऋषेः सत्सङ्कल्पत्वविरोधात् । गजेन्द्रमोचनस्थल इव ध्यानानुभावगृहीतेन रूपेण प्रादुर्भाव इत्यपीह वक्तुमशक्यत्वात् । तथासत्येको मयेत्यादिप्रश्नायोगात् । तस्मान्न तुरीयस्य विग्रहाभ्युपगमो युक्त इति ,

अत्राभिधीयते— प्रतीयते तावदुमासहायमित्यादिमन्त्रवर्णेभ्यस्तुरीया उमासहायत्वादिविशिष्टा मूर्तिः । साऽपि न ध्यानार्थमारोपितेति शक्यं वक्तुम् । छान्दोग्ये समानप्रकरणे गुणोपसंहारन्यायेनोपास्यस्य ब्रह्मण उदाहृतमन्त्रवर्णसिद्धमूर्तिमिद्धवत्कारेण 'एष आत्माऽपहतपाप्मा' इत्यादिना शरीरवत्त्वसामान्येन प्रसक्तानां जरामरणविजिघत्सापिपासादीनां प्रतिषेधदर्शनात् । अन्यथा तेषामप्रसक्तप्रतिषेधत्वापातात् । न च मूर्तित्ववदजरत्वादयोऽपि केवलमुपासनार्थमारोपिता एवोपन्यस्यन्त इत्यस्त्विति वाच्यम् । अत्रैव 'अस्मिन् कामास्समाहिताः' इत्यादिना तेषामनारोपितेश्वरगुणत्वस्फुटीकरणात् । नन्वजरत्वादि न विग्रहगुणत्वेनोपास्यम् । 'एष आत्माऽपहतपाप्मा' इत्यादिना आत्मगुणत्वोक्तेः तद्गुणैः सत्यकामत्वादिभिः सह पाठाच्चात्मनि च जरादिप्रसक्त्यभावेऽपि स्वतस्सिद्धाजरत्वाद्यस्त्येवेति तदेवोपास्यत्वेन निर्गुणप्रकरणश्रुताजरत्वादिवदातिथ्यादावनूयाजादिनिषेधवच्च स्तुत्यर्थत्वेन वा निर्दिश्यत इति चेन्न । सर्ववेदान्तप्रत्ययन्यायेन तत्र विग्रहविशिष्टस्यैव ब्रह्मण उपास्यत्वे स्थिते औचित्यात् 'तस्योपरि शिवं ध्यायेत् साम्बं सर्वमनोहरम् । सर्वलक्षणसम्पन्नं गाढयौवनशोभनम् ॥' इत्याद्युपबृंहणानुरोधाच्चाजरत्वादेर्विग्रहगुणत्वेनैवान्वयात् । तथात्वेऽपि तद्द्वारा आत्मगुणत्वसम्भवेन तद्व्यपदेशस्य तद्गुणैः सहपाठस्य च 'त्रिलोचनं नीलकण्ठं प्रशान्तम्' 'बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिबर्हणः । विपुलांसो महाबाहुः' इत्यादाविवोपपत्तेश्च । 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यादिना विधानायानूद्यमानस्य स्तुत्यर्थत्वायोगाच्च । तस्माद्विग्रहगुणस्याजरत्वादेः स्वरूपतो विद्यमानत्वेन निर्दिश्य उपास्यतया विधानेनानारोपितत्वाध्यवसायात् धर्मिणो विग्रहस्याप्यनारोपितता निश्चीयत इत्युपगन्तव्यैव तुरीयस्यापि मूर्तिः । उ-

क्तं च सूतसंहितायाम्—'उमार्धविग्रहा शुद्धा त्रिणेत्रा चन्द्रशेखरा । नीलग्रीवा परानन्दा प्रमोदात्ताण्डवप्रिया । ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः । सर्वमूर्तिविहीनस्य सर्वतत्त्वाधिपस्य[1] च ॥ तथाप्येषा परा मूर्तिरित्येषा शाश्वती श्रुतिः ।' इति । पराशरपुराणे—'साक्षात्परतरस्यैव वस्तुनः सर्वसाक्षिणः । अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी ॥ तस्यासाधारणा मूर्तिः साम्बा चन्द्रार्धशेखरा ।' इत्यारभ्य 'ब्रह्मविष्णुमहेशानास्तां ध्यायन्ति निरन्तरम् ॥' इत्यन्तेनोक्तम् । एवं 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इति रविबिम्बमध्यवर्तित्वेन प्रसिद्धवन्निर्देशः। तलवकारश्रुतावथर्वशिरसि च श्रुतस्य ब्रह्मणो देवैस्सह संवादस्यानुपपत्तिः, 'अजातमिममेवैकं मत्वा जन्मनि भीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणं मुखम् ।' इति वायूक्त्युपबृंहित इतरव्यवच्छेदेन जन्मराहित्यप्रतिपादनेन स्फुटीकृतविग्रहानादित्वतात्पर्यकः 'अजात इत्येवं कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् ।' इति श्वेताश्वतरोपनिषन्मन्त्रश्च भगवतो दिव्यविग्रहसद्भावे प्रमाणम् । एषां च तुरीयविग्रहविषयत्वं तत्रतत्र स्फुटीकरिष्यते । किं च पुराणेषु सर्वत्र परमशिवनिरूपणप्रकरणे तस्य मूर्तिमत्त्वेन प्रतिपादनाद्विग्रहसिद्धिः । न च तत्र गुणिरुद्रविषयत्वेनान्यथासिद्धिः शङ्कार्हा । सर्वेष्वपि शिवमहिमपरेषु शिवपुराणेषु शिवस्य कारणत्रयपरत्वोपवर्णनदर्शनात् ततोऽपि पुनस्तुरीयस्य व्यतिरेककल्पनायां प्रमाणाभावात् । तथा हि कूर्मे तावत् पूर्वभागे ब्रह्मविष्णुरुद्रान् प्रस्तुत्योक्तम्—'एभ्यः परतरो देवः तस्यास्ति परमा तनुः[2] । माहेश्वरी त्रिनयना योगिनां शान्तिदा सदा ।' इति । उत्तरभागेऽप्युक्तं— 'सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः । प्रधानाः संस्मृता देवाः शक्तयः परमात्मनः ॥ आभ्यः परस्ताद्भगवान् परमात्मा सनातनः । गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ॥ एनमेके वदन्त्यग्निं नारायणमथापरे । इन्द्रमेके परे प्राणान् ब्रह्माणमपरे विदुः ॥ ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवास्तथर्षयः । एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्तिताः ॥ इति । शिवपुराणे—'सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः । संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥ तस्मात् त्रयस्ते कथ्यन्ते जगतः कारणत्रयम् । कारणत्रयहेतुश्च शिवः परमकारणम् ॥' इति । स्कान्दे—'ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः । एषां त्रयाणामाधिकः सर्वकारणमीश्वरः ॥' इति । एवं लैङ्गसौरपाद्मगारुडब्रह्माण्डशिवधर्मादिष्वपि वचनानि द्रष्टव्यानि । विस्तरभयात् तत्र तत्र केषाञ्चिदुदाहरिष्यमाणत्वात् सर्वैकमत्यस्य स्फुटत्वाच्च नेह लिख्यन्ते । तस्मादनेकश्रुत्यादिसिद्धत्वात्

१. 'सर्वभूताधिपस्य च' इति पाठान्तरम् । २. 'त्रिमूर्तिपरमा तनुः' इति पाठान्तरम् ।

परब्रह्मणो विग्रहवत्त्वस्य तदविरोधाय मैत्रायणश्रुतौ तनुशब्दो 'राजसोंऽश' इत्यादिवचनस्वारस्यादंशपरः, अग्रशब्दः सादिब्रह्ममूर्त्यन्तरापेक्षयाऽग्रत्वपरइति वा व्याख्येयम् । यद्वा 'अग्राख्यायामुरस' इत्यादावग्रशब्दस्य प्रधाने प्रसिद्धेः प्रधाने परमशिवविग्रहे भवाइति वा व्याख्येयम् । त्रिमूर्तीनां परमशिवविग्रहे जननात्। यद्यपि 'भवे छन्दसि' इत्यधिकारे 'अग्राद्यत्' इति यत्प्रत्ययस्स्मृतः । भवार्थश्च सत्ता, न जन्म । 'तत्र जातः, तत्र भव' इति पृथगधिकारात् । 'नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च' इत्यादौ काट्यादिषु परमेश्वरस्य सद्भावमात्रेण भवार्थप्रत्ययदर्शनाच्च, तथाऽपि 'नासतो विद्यते भावः' इति स्मृतेर्जन्मस्थले सत एव कार्यस्योत्पत्तिरिति जातेऽपि भवार्थप्रत्ययो न विरुध्यते । ऊरव्या ऊरुजा इति जाते भवार्थप्रत्ययस्यान्यत्रापि दर्शनात् । दर्शितश्च तिसृणां मूर्तीनां परमशिवविग्रहे जननं शिवराघवसंवादे—'स एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः । त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः ॥ जाता सिसृक्षा तस्याथ वीक्ष्यात्मस्थं गुणत्रयम् । देवत्रयमिदं ज्ञेयं गुणत्रयमिदं हि यत् ॥ पृथक्कृत्यात्मनस्तद्धि तत्र सारं विभज्य च दक्षिणादसृजत्पुत्रं ब्रह्माणं वामतो हरिम् ॥ पृष्ठदेशान्महेशानं त्रीन् पुत्राननृजत्प्रभुः ।' इति । यत्तु भागवतवचनमुदाहृतं, तदपि परमशिवमूर्तेरतिरहस्यत्वेनालभ्यदर्शनतयाऽत्रेः कथञ्चित्सत्सङ्कल्पत्वसिद्धये सोमाद्यवतारत्रयेण लोकतन्त्रनिर्वाहाय च मूर्तित्रयेण प्रादुर्भाव इत्येतदाभिप्रायमिति न विरोधः । अलभ्यदर्शनत्वञ्च परमशिवमूर्तेर्दर्शितं शिवपुराणे—'अप्राकृतवपुः श्रीमान् लक्ष्यलक्षणवर्जितः ।'इत्यादिना तन्महिमाविशेषानुपवर्णयता कमलासनेन 'हरिश्चाहं च रुद्रश्च तथाऽन्ये च सुरासुराः । तपोभिरुग्रैरद्यापि तस्य दर्शनकाङ्क्षिणः ॥' इति । नन्वस्त्वेवं परस्य विग्रहसद्भावः, तथाऽपि शिवभवादिशब्दानां गुणिरुद्रवाचिनामेव वस्त्वभेददृष्ट्या तत्रापि प्रयोगोपपत्तेर्न तस्य तद्वाच्यत्वमङ्गीकरणीयमिति चेन्न । नीलकण्ठत्वादिविशिष्टमूर्तिशबलिते ब्रह्मणि तेषां व्युत्पत्तेः प्रसिद्धत्वादथर्वशिरश्शिखादिषु महेश्वरमहादेवादिशब्दानां तन्नामत्वेन निर्वचनाच्चास्य शिवादिशब्दवाच्यत्वस्याप्यभ्युपगन्तव्यत्वात् । ननु, यद्युमासहायस्त्रिलोचनत्वादिविशिष्टमूर्तिशबलितः शिवपरेषु पुराणेषु विविधमहिमाकरत्वेन लिङ्गादिषूपास्यत्वेन च प्रतिपाद्यमानः पुरुषस्त्रिमूर्त्यतीतं परमेव ब्रह्म, तर्हि स्रष्टृपालकयोर्ब्रह्मनारायणयोस्तृतीयः संहर्ता किन्नामरूपः, किंचास्य प्रतिपादकं पुराणादि, उच्यते—यादृशं परमशिवस्य रूपं, यानि च नामानि, तादृशमेव तस्यापि रूपं, तान्येव च नामानि । तदुक्तं सूतसंहितायां—'तप्तायःपिण्डवद्भिन्ना रुद्रमूर्तिः परस्य तु । मूर्त्या तुल्यान्यमूर्तिभ्यो लक्षणैर्मुनिसत्तमाः ॥ परतत्त्वस्य नामानि

प्रत्यासत्त्या मुनीश्वराः । त्रिमूर्तीनां तु रुद्रस्य ह्यभिधानानि सुव्रताः ॥' इति शिवपुराणेऽपि संहाररुद्रमाहात्म्यं प्रस्तुत्योक्तं—'स एष भगवानीशस्तेजोराशिर्निरामयः । अनादिनिधनो धाता भूतसंकोचको विभुः ॥ परमैश्वर्यसंयुक्तः परमेश्वरभावितः । तच्छक्त्याधिष्ठितः शश्वत्तच्चिह्नैरपि चिह्नितः ॥ तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः । तत्तुल्यव्यवहारश्च तदाज्ञापरिपालकः ॥' इत्यादि । यद्यपि तस्यासाधारण्येन प्रतिपादकं पुराणं नास्ति, तथाऽपि प्रत्यासत्त्यतिशयात् परमशिवपरेष्वेव पुराणेषु तत्प्रतिपादनं, यथाऽनुपदमेवोदाहृतं शिवपुराणे । उक्तञ्च पराशरेण—'माहेश्वरपुराणानि समस्तानि महामुने । असाधारणया मूर्त्या नाम्ना साधारणेन च ॥ वदन्ति परमं तत्त्वं शिवं साम्बं त्रिलोचनम् । त्रिमूर्तीनां हरञ्चापि तदंशं तस्य वैभवम् ॥ तदंशस्याभिधानञ्च वदन्ति च महामुने ।' इति । एवमाराधनमपि तस्य परमशिवाभिव्यक्तिस्थानेष्वेव लिङ्गादिषु । एवं परमशिवस्य गुणिरुद्रस्य च नामरूपादिसाम्यादेव स्फुटं ब्रह्मविष्णुभ्यां प्रत्यासत्त्यतिशयावगमाद्विशिष्य परमशिवाभेदेन गुणिरुद्रस्य व्यवहारः पुराणादिषु शैवानाञ्च तत्राभिमानातिशयो गुणचरितादिसाधारण्यव्यपदेशश्च । अत एव केषाञ्चिदद्यापि तयोर्विवेकाग्रहः । अथ पुराणादिसिद्धासु शैवीषु मूर्तिषु काः परमशिवमूर्तयः, काश्च गुणिरुद्रमूर्तयः । केचिदाहुः—आनन्दताण्डवविग्रहो दक्षिणामूर्तिविग्रहः ताण्डवपरोमाधवविग्रहश्चेति विग्रहत्रयमेव परमशिवस्य । अन्ये तु गुणिरुद्रस्येति । तन्न रोचयामहे । योगयाज्ञवल्क्ये 'पृथिव्यां वायुमारोप्य लकारेण समन्वितम् । ध्यायंश्चतुर्भुजाकारं ब्रह्माणं परमेष्ठिनम् ॥ धारयेत्पञ्च घटिका धारणात् सिद्धिमाप्नुयात् । वारुणे वायुमारोप्य वकारेण समन्वितम् । शुद्धस्फटिकसङ्काशं पीतवाससमच्युतम् । धारयेत्पञ्च घटिकाः सर्वपापैः प्रमुच्यते ॥ वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् । त्र्यक्षं च वरदं रुद्रं तरुणादित्यसन्निभम् ॥ भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् ।' इत्याद्युक्त्वा 'आकाशे वायुमारोप्य हकारेण समन्वितम् । बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥ शुद्धस्फटिकसङ्काशं बालेन्दुकृतशेखरम् । पञ्चवक्त्रधरं सौम्यं दशबाहुं त्रिलोचनम् ॥ सर्वायुधोद्यतकरं सर्वभूषणभूषितम् । उमार्धदेहं वरदं सर्वकारणकारणम् ॥ चिन्तयन् चित्तविन्यस्तं मुहूर्तमपि धारयेत् । स एव मुक्त इत्युक्तस्तान्त्रिकेष्वपि शिक्षितैः ॥' इति परमशिवस्य पञ्चवक्त्रसदाशिवमूर्तेरपि प्रतिपादनात्, वायुसंहितायां च योगेश्वराख्यपूजाविधाने तथैव तस्याः प्रतिपादनात्, कूर्मपुराणे च नीललोहितकारितब्रह्मपञ्चमशिरोलवनप्रस्तावे 'अथान्वपश्यद्गिरिशं मण्डलान्तरसंस्थितम् । समासीनं महादेव्या महादेवं सनातनम् ॥' इत्यादिनैकासनस्थितोमासहायशूलधरमूर्तेरपि त-

दीयायाः प्रतिपादनात् । तस्मादथर्वागमात्मार्योपदेशमन्येऽपि विग्रहाः परमशिवस्य प्रतिपत्तव्याः । तेषां तु परिच्छेदोऽतिरहस्यत्वाद्गुरूपदेशैकगम्य इति तेनात्र प्रदर्श्यन्ते ।

एवं मायावपुर्ब्रह्म तुरीयं विश्वकारणम् ।
उमासहायो भगवानिन्दुमौलिरिति स्थितम् ॥

ननु, मूर्तित्रयातीतं मायोपाधिकं ब्रह्म नारायण इत्यपि केभ्यश्चिद्वचनेभ्योऽवसीयते। तथाहि—विष्णुपुराणे तावत्—'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालस्तथैवाखिलजन्तवः । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलयायैते जनार्दनविभूतयः ॥' इति । एवं भागवतबृहन्नारदीयादिवचनानि क्वचित्क्वचिदुपलभ्यन्ते । प्रपञ्चसारोपक्रमे च त्रिमूर्तीनां शेषशायिनः पुरुषोत्तमस्य च प्रश्नोत्तरनिबन्धनेन स्फुटीकृतोऽयमर्थः । उत्तरतापनीये नृसिंहस्य तुरीयत्वेन व्यपदेशात् पूर्वतापनीये च 'ब्रह्मा विष्णुर्महेश्वरः पुरुष ईश्वरः सरस्वती श्रीगौरी प्रकृतिर्विद्या' इत्यारभ्य 'सर्वं यो वै नृसिंहो देवो भगवान्यच्च सर्वं तस्मै ते नमः' इत्यन्तेन ब्रह्मादीनां नृसिंहविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलताऽप्यस्यार्थस्य प्रतीयते । तथा च कथं तुरीयः परमशिव इति निर्णयः । अत्राभिधीयते—

पादो वैश्वानरादीनां तुरीयो निर्गुणः श्रुतः । उत्तरस्मिंस्तापनीये
न गुणिभ्यः परो हरिः ॥ निर्गुणात्मप्रतिक्षेपे शिवं शान्तमिति श्रुतेः ॥
तुरीयः शिव एव स्याद्वैन्द्रीन्यायस्त्वनुष्टुभः । अस्तु वा नरसिंहस्थं
तुरीयं पादमात्मनः । कुर्वता तेन नोक्ता स्याद्गुणिभ्यः परता हरेः ॥

पूर्वतापनीयमन्त्रस्त्वथर्वशिखाद्यनेकश्रुत्यन्तरसिद्धं 'ममैव सा परा शक्तिर्देवी विद्येति संज्ञिता ।' इति शिववचनसिद्धविद्याभिधानपाठसादेश्यगम्यसम्बन्धोमावल्लभस्येश्वरस्य त्रिमूर्तिभ्यः 'योजयामि प्रकृत्याहं पुरुषं पञ्चविंशकम् ।' इति कौर्मोक्तेः प्रकृत्यन्वितात् पञ्चविंशाच्च पृथक्परिगणनेन स्वानुमतं च शम्भोस्त्रिमूर्त्यतीतमायोपहितब्रह्मरूपत्वं प्रतिक्षिप्य न विष्णोस्तथात्वविधानक्षमः । अतस्त्रिमूर्त्यन्तर्गतस्यैव तस्य वस्तुकृतसार्वात्म्यख्यापनाय प्रवृत्तस्सन् 'वृष्णीनां वासुदेवोऽस्मि' इति कृष्णवचनवत् तमपि तद्विभूतिमध्ये गणयतीति वा 'अथ कैर्मन्त्रैः स्तुतो देवः प्रीतो भवति । एतैर्मन्त्रैर्नित्यं देवं स्तुध्वम् ' इत्युपक्रमोपसंहाराभ्यां स्तुतिपरत्वावसायात् । तदवताररूपे नृसिंहे 'विरिञ्चिनारायणशङ्करात्मने' इति वचनं सवितरीव स्तुत्यर्थं ब्रह्माद्यात्मत्वं व्यपदिशतीति वा नेतव्यः । एवं च पुराणवचनानि विष्णोरनिरुद्धादिपरत्वतात्पर्येणापि चरितार्थानि न मूर्तित्रयपरत्वं व्यवस्थापयितुं क्षमन्ते । तथा हि—

शिवस्य रुद्रविष्णुद्रुहिणा इव तेषामपि सन्ति व्यूहा जगतां हरणभरणसमुत्पादने-ष्वधिकृता वायुसंहितादिप्रसिद्धाः । ब्रह्मणो विराट्कालपुरुषाख्यास्त्रयः, विष्णोः सङ्कर्षणप्रद्युम्नानिरुद्धाख्याः, रुद्रस्य हरमृडभवाख्याः । एते च दक्षमन्वन्तकादिवत्सृष्ट्यादिष्ववान्तराधिकारिणः । एवं च विष्णोस्त्रिमूर्तिपरत्वपराणि वचनानि स्वव्यूहत्रयपरत्वपराण्युपपद्यन्ते । तद्व्यूहानामपि सृष्ट्याद्यधिकारादि-सामान्याद्ब्रह्मादिव्यपदेशोपपत्तेः 'एका भगवती मूर्तिर्ज्ञानरूपा शिवाऽमला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला ॥ द्वितीया रुद्रसंज्ञा स्यात् तामसी शेष-संज्ञिता । निहन्ति सकलं चान्या वैष्णवी परमा तनुः ॥ सत्त्वोद्रिक्ता तृतीयाऽन्या-प्रद्युम्नेति च संज्ञिता । जगत्स्थापयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा ॥ चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति संज्ञिता । राजसी चानिरुद्धाख्या पुरुषः सृष्टिकारिका ॥' इति कौर्मे तेषां तद्व्यपदेशदर्शनाच्च । एवं ब्रह्मणस्त्रिमूर्तिपरत्ववचनानामप्युपपत्तिरुन्नेया । वायुसंहितायां—'तदण्डेऽस्मिन्विवृद्धोऽभूत्क्षेत्रज्ञो ब्रह्मसंज्ञितः ।' इति ब्रह्माणं प्रस्तुत्य 'त्रिधा विभज्य चात्मानं त्रैलोक्ये सम्प्रवर्तते । सृजते ग्रसते चैव रक्षते च त्रिभि-स्स्वयम् ॥' इत्यादिना तद्व्यूहान् प्रदर्श्य 'सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च तमो रजः । विष्णुत्वे केवलं सत्त्वं गुणवृत्तिस्त्रिधा विभोः ॥' इति तद्व्यूहानां गुणविभागश्लोके ते-ष्वपि ब्रह्मादिशब्दप्रयोगाच्च । ननु, तर्हि शिवस्य त्रिमूर्तिपरत्ववचनान्यपि संहार-रुद्रव्यूहभूतभवमृडहरपरत्वपराणीति संहाररुद्र एव त्वदभिमतः शिवोऽस्तु । तस्य गुणमूर्तिभ्यः परत्वे न मानमिति चेन्न । 'सृजत्यशेषमीशस्य शासनाच्चतुराननः । तिसृभिर्मूर्तिभिश्चापि पाति चान्ते निहन्ति च ॥ विष्णुः पालयते विश्वं विश्वयोनेर्नियोगतः । सृजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः ॥ हरत्येतज्जगत्सर्वं हरस्तस्यैव शासनात् । सृजत्यपाच्च विश्वात्मा त्रिधा भिन्नस्तु रक्षति ॥' इति शिवपुराणे स्व-स्वव्यूहसहितानां ब्रह्मविष्णुरुद्राणां शिवनियोगेन स्वस्वकृत्ये प्रवृत्त्युपन्यासेन तत्रैव योगेश्वराख्यपूजाविधौ स्वस्वव्यूहावरणकानां तेषां शिवावरणे पूजाविधानेन योगयाज्ञवल्क्ये तत्तद्रूपोपन्यासेन प्रसिद्धानेव ब्रह्मादीन् प्रस्तुत्य सदाशिवस्य तेभ्यः परत्वकथनेन च तस्य त्रिमूर्त्यतिरेकसिद्धेः । एवं तर्हि विष्णुपुराणे 'यस्य प्रसादादहमच्युतस्य' इत्यादिब्रह्मवचनाद्विष्णोस्त्रिमूर्त्यतिरेकः कुतो न सिध्येत् । न हि ब्रह्म-वक्तृके वाक्येऽनिरुद्धे अहंशब्दप्रयोग उपपद्यत इति चेन्न । अहङ्काराभिमानित्वादनिरुद्धस्य । 'वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा' इत्यत्रेव तत्रापि नामैकदेश-त्वेनाहंशब्दप्रयोगोपपत्तेः । तस्य वक्तृपरत्वेऽपि 'यस्माच्च मध्ये पुरुषः पुराणः' इत्यत्र पुरुषपदस्य प्रद्युम्नपरत्वेनाप्युपपत्त्या ततः श्रुत्यननुरोधिनो विष्णोस्त्रिमूर्ति-परत्वस्यासिद्धेः । विष्णुपुराण एव पुराणप्रतिपाद्यं नारायणं प्रस्तुत्य 'स परः सर्वश-

क्तीनां ब्रह्मणः समनन्तरः ।' इति तस्य जगत्कारणब्रह्मापरत्वोक्तेः । भागवतोपक्रमे च—'तस्मादेकेन मनसा भगवान् सात्वतां पतिः । श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥' इत्यादिना भगवतः श्रवणादिकं विधाय कोऽसौ भगवानिति जिज्ञासायां 'सत्त्वं रजस्तमः' इत्यादिश्लोकेन सत्त्वगुणोपहितं परमपुरुषांशं श्रेयस्करानुवादेन प्रागुपक्षिप्तनियतभजनीयत्वोपपादनपूर्वकं भगवन्तं विधाय 'भेजिरे मुनयोऽथाग्र'इत्यादिना तद्भजनस्य क्रममुक्तिफलमुपपाद्य तस्य सकलवेदप्रतिपाद्यत्वादिकमुक्त्वा 'जगृहे पौरुषं रूपम्' इत्यादिना तस्य लीलाविग्रहसद्भावं प्रतिपाद्य 'एतन्नानावताराणां निदानं बीजमव्ययम् ।' इति तस्य सकलवैष्णवावतारमूलविग्रहत्वप्रदर्शनेन सत्त्वोपहितः परमपुरुषांश एव परं विष्णुतत्त्वमिति स्फुटीकरणात्, पराशरपुराणे 'माहेश्वरपुराणानि' इत्यादिना शैवपुराणानां परमशिवसंहाररुद्रोभयपरत्वमुक्त्वा 'वैष्णवानि पुराणानि समस्तानि महामुने । त्रिमूर्तीनां हरेर्नाम्ना मूर्त्यां तस्य परं पदम् ॥ प्रवदन्ति पुराणे हि ब्राह्मे चैवानया दिशा ।' इति वैष्णवपुराणानां त्रिमूर्त्यन्तर्गत एव विष्णौ पर्यवसानोक्त्या स एव परं तत्त्वमिति स्फुटीकरणाच्च । तस्मादुक्तस्तुरीयः परमशिव एवेति निर्णयः ।

अथवाऽस्तु तुरीयकोटावपि नारायणमूर्तिः, न हि तुरीयकोटावेकरूपैव मूर्तिर्ब्रह्मण इति नियमः । तत्रैवाविगीतसकलशैवपुराणप्रसिद्धेः, 'गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदः' इत्याद्यभियुक्तोक्तेश्च भवानीमूर्तेरपि सद्भावात्, इहापि 'परिष्कुर्वन् साम्बं वपुः' इति तथैवाभ्युपगमाच्च । किन्तु पराशक्तेर्भवान्या एव पुंरूपो विलासः । 'एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले । भोगे भवानी पुरुषेषु विष्णुः कोपे तु काली समरे तु दुर्गा ॥' इत्यागमिकोपदेशात्, 'उमा या स हरिः साक्षाद्यो हरिः सा शिवा स्मृता ।' इत्यादिवचनात्, 'प्रकृतिस्त्वं पुमान् रुद्रः त्वयि तद्वीर्यमाहितम् । त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः ॥' इति ब्रह्माण्डपुराणे 'नावयोर्विद्यते भेदो मच्छक्तिस्त्वं न संशयः । त्वं चन्द्रमा अहं सूर्यः शर्वरी त्वमहं दिनम् ॥' इत्यादित्यपुराणे च विष्णोः शिवशक्तित्वव्यपदेशात् कौर्मवासिष्ठलैङ्गादित्यपुराणादिषु शिवनारायणयोर्भार्यापतिभावेन देवदारुवनप्रवेशोपवर्णनात् । तत्प्रकरणे 'या तस्य पार्श्वगा बाला सा पार्वत्यंशजो हरिः ।' इत्याद्युक्तेः, लैङ्गपुराणे 'एष बीजी भवान् बीजमहं योनिः सनातनः । स एवं मुक्तो विश्वात्मा ब्रह्मा विष्णुमपृच्छत ॥ भवान्योनिरहं बीजं कथं बीजी महेश्वरः । एनं मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ॥ ज्ञात्वा विविदिषोत्पत्तिं ब्रह्मणो लोकतन्त्रिणः । इमं परमसूक्ष्मार्थं प्रश्नमभ्यवदद्धरिः ॥ अस्मान्महत्तरं भूतं गुह्यमन्यन्न विद्यते । महतः

परमं धाम शिवमध्यात्मिनां पदम् ॥ द्वैधीभावेन चात्मानं प्रविभज्य व्यवस्थितम् । निष्कलं सूक्ष्ममव्यक्तं सकलस्तु महेश्वरः ॥ अस्य मायाविधिज्ञस्य अगम्यगहनस्य च । पुरा लिङ्गादभूद्बीजं प्रथमं त्वादिसर्गिकम् । मम योनौ समासक्तं तद्बीजं कालपर्ययात् । हिरण्मयमकूपारे योन्यामण्डमजायत ॥' इति विष्णोः शिवक्षेत्रत्वस्फुटीकरणाच्छिवकेशवयोः शिवनाभशिलायां लिङ्गक्षेत्रयोः सन्निधानेन हरिहरात्मके रूपे हरेर्वामार्धत्वेन च लिङ्गनाम्यार्थस्य स्फुटीकरणात्, 'योऽयं चकास्ति गगनार्णवरत्नमिन्दुर्योऽयं सुरासुरगुरुः पुरुषः पुराणः । यद्वाममर्धमिदमन्तकसूदनस्य देवि त्वमेव तदिति प्रतिपादयन्ति ॥' इत्यभियुक्तोक्तेश्च । एवं च तुरीयकोटिनिविष्टस्यापि नारायणस्य भवानीवदेव शिवोपसर्जनत्वादिह व्यवस्थापनीयस्य शिवमूर्तेः सर्वतः परत्वस्य न विरोधः ।

मतद्वयमुपन्यस्तं विष्णुतत्त्वविनिर्णये । यदत्र युक्तं तद्ग्राह्यं विमृश्य विबुधोत्तमैः ॥ मतद्वयेऽपि भगवानम्बिकारमणः शिवः । अशेषब्रह्ममूर्तीनामादिभूतो जगत्पतिः ॥ भैरवाद्या हरस्येव मत्स्याद्याः श्रीपतेरिव । ब्रह्मविष्णुहरास्तस्य कलाभेदा इति स्थितम् ॥१२॥

एवं च यद्यपीशस्य चन्द्रखण्डशिखामणेः । उत्कर्षः सर्वदेवेभ्यस्तत एव प्रसिध्यति ॥ तदाश्रयाणां वचसां शिष्टाकोपादितान्वयात् । सर्वेषामाश्रयबलाद्बलवत्त्वावधारणात् । इतरेषाश्च देवानां श्रुतिषु स्मरणेषु वा ॥ तत्साम्याधिक्यवचसां गुणवादत्वकल्पनात् । किमग्निष्टोमतुल्यत्वे श्रुतेऽपि सति तत्समम् ॥ अग्निहोत्रं भवेत्तस्य कर्मभूयस्त्वनिर्णये ॥ 'भारतं सर्ववेदाश्च तुलामारोपिताः पुरा । देवैर्ब्रह्मादिभिस्तत्र त्वत्यरिच्यत भारतम् ॥' इति वेदेभ्य उत्कर्षे भारतस्य स्मृतेऽपि च । किं वा भवेत्तत्सर्वेभ्यो वेदेभ्यो बलवत्तरम् ॥ 'मतिमन्थानमावेश्य येन वेदमहार्णवात् । प्रकाशो जनितो लोके महाभारतचन्द्रमाः ॥' इत्यादिवचनैर्न्याय्यैर्वेदमूलत्वनिर्णये । भारताधिक्यवचसामर्थवादत्वकल्पनात् ॥ तथाऽपि भवति भ्रान्तिः केषाञ्चिन्मन्दचेतसाम् । अवैदिकमताभ्यासधृष्टानां वा दुरात्मनाम् ॥ सत्त्वाद्युपहितेभ्योऽयं मायी भिन्नोऽस्तु शङ्करः । तथाप्यैश्वर्यविश्रान्तिरन्यत्रैव भवत्त्विति ॥ उक्तैषा

प्रक्रियाथर्वशिखादिश्रुतिमूलिका । तासामन्यार्थकत्वे तु नैवेयं
सिध्यतीति वा ॥ अतः श्रुतीनां सर्वासां सह सर्वोपबृंहणैः ।
परभावे भगवतस्तात्पर्यं कथ्यते क्रमात्—

अपास्य ब्रह्मादीनमरवर सर्वानपि सुरान्
प्रसूता भूतार्थैः प्रमितविभवास्ते परमिति ।
निदानं त्वां सर्वेश्वरमपि च निर्धार्य विदधे
शिखा सद्भिर्ध्येयं शिव तदपि मुग्धत्यतिलघुः ॥१४॥

अथर्वशिखायां 'किन्तद्ध्यानं को वा ध्याता कश्च ध्येयः' इत्युपक्रमस्थप्रश्नानुरोधेन ध्यानध्यातृनिरूपणानन्तरं ध्येयनिर्धारणार्थमाम्नायते—'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणन्तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्ये' इत्यादि 'शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य समाप्ताऽथर्वशिखा' इत्यन्तम् । अत्र योगरूढ्या परमशिवे वर्तमानस्येशानशब्दस्य ताच्छील्यार्थे चानशः शक्ततया योगेन स्वाभाविकनिरतिशयैश्वर्यपरत्वात् रूढ्या परमशिववाचित्वाच्च सर्वोत्कृष्टफलार्थिभिः सर्वातिशायैश्वर्यः परमशिवो ध्यातव्य इति भावेनेशानशब्देन विशेष्यनिर्देशः कृतः । प्रध्यायितव्यमित्याधिक्येन ध्यनार्हत्वेन स्तुतिः । अतः किमन्ये न तादृशाः येनैवमवधारणं बाढमिति ध्वनयितुं देवमनुष्यादिरूपे सर्वप्रपञ्चे ब्रह्मादीनां चतुर्णां प्रामुख्यमुक्त्वा तेषामप्यैश्वर्यपरिच्छेदसूचनाय तदुपपत्तितया दीपकेन सहोक्त्या च भूतेन्द्रियादितौल्येन तेषामुत्पत्तिमत्त्वं दर्शितं 'सर्वमिदमित्यारभ्य सह भूतै'रित्यन्तेन । यद्येतत् परमशिवस्यापि स्यात् , न स्यात् तस्यापि तद्वदेव ध्येयत्वमित्याशङ्क्योक्तं 'न कारणं कारणानां धाता ध्याते'ति। प्रसूयत इति वचनविपरिणामेनानुषङ्गः । तथाचायमर्थः—ब्रह्मादीनां प्रसूत्युक्तिसामर्थ्याद्यत्तेषामर्थसिद्धं कारणं, तद्भूतः कारणानां ब्रह्मविष्णुरुद्राणां मन्त्रोपनिषदुक्तानां कालादीनां वा धाता स्रष्टा ध्याता आदिसर्गसङ्कल्पकर्ता, एवंभूत ईशानः कुतोऽपि न संप्रसूयत इति । यद्यप्यनेन ब्रह्मादीनां यदर्थलब्धं कारणं, तन्न संप्रसूयत इत्येतावदेव प्रतीयते, न त्वीशान इति, तथाऽपि तस्य ध्येयत्वं विधाय ब्रह्मादीनां ध्येयत्वव्यवच्छेदार्थं तेषु दोषोद्भावनानन्तरं तर्हि तद्दोषसद्भावे तस्यापि ध्येयत्वं न स्यादित्यवमरप्राप्तशङ्काव्यवच्छेदाय तत्रैव तद्दोषस्य प्रत्याख्यातव्यत्वात्। अन्यथान्तरालवाक्यं परित्यज्य 'विष्णुरुपांशु यष्टव्यः' इत्यादिवाक्यानां यागविधायकत्वस्वीकारे उपक्रमसंकीर्तितपुरोडाशद्वयनैरन्तर्यप्रयुक्तनामितादोषपरिहारालाभात् ।

तत्र वाक्यच्छायाया इवेहाप्यसाङ्गत्यापत्तेः । प्रागेव वाक्यप्रवृत्तिभङ्ग्येशाने ब्रह्मादिषूद्भावितदोषपरिहारे तात्पर्यावसायात, ब्रह्मादीनामर्थलब्धे कारणे तत्परिहारसामर्थ्यादीशान एव ब्रह्मादीनां कारणमिति गमयतीति तस्यैव तत्र प्रसूत्यभाव उपन्यस्त इति निर्णीयते । किञ्च केवलयौगिकत्वेनेह प्रयुक्तयोर्धातृध्यातृशब्दयोः कारणं त्वित्यत्र तुशब्दस्वारस्येन तत्र वाक्यारम्भप्रतीतेरिहैव वाक्येऽन्वितयोः स्वतो लिङ्गव्यवस्थाशून्यतयाऽन्यलिङ्गग्राहिणोः स्वसमानाधिकृतव्यवस्थितलिङ्गकारणशब्दलिङ्गग्राहित्वे नपुंसकलिङ्गापत्तेः । श्रुतपुल्लिङ्गनिर्वाहाय पुल्लिङ्गविशेष्यापेक्षायामाकाङ्क्षितार्थसंवटनानुकूलसन्निधिश्रुतशब्दानुषङ्गे सम्भवत्यतादृशशब्दान्तराध्याहारायोगादीशानशब्दानुषङ्गस्यावश्यकत्वेन शिवस्यैव सामर्थ्यसिद्धब्रह्मादिकारणत्वसिद्धवत्कारेण तत्र प्रसूत्यभाव उपन्यस्त इति निश्चीयते । अत एवानन्तरवाक्ये कारणमित्यस्य शम्भुपदसामानाधिकरण्यं दृश्यते । 'तत्र चाकाशमध्ये' इत्युपासनास्थानकथनं परमाकाशरूपपरशिवलोकाभिप्रायम् । तेन हृदयकमलरविबिम्बादिषु यत्रयत्र शिवस्य ध्यानं, तत्र सर्वत्रापि ज्योतिर्मयं कैलासं विभाव्य तन्मध्यवृत्तित्वेन शिवो ध्येय इति विदितं भवति । 'सर्वेश्वरः' इति शिवनामत्वेन प्रयोगः, 'ओङ्कारं सर्वेश्वरं द्वादशान्ते' इति तापनीयप्रयोगेण पुराणप्रसिद्ध्या च तस्य तन्नामत्वावसायात्, न तु सर्वैश्वर्यपरत्वेन प्राचीनविशेषणेन । पौनरुक्त्यापत्तेः । यद्वा यौगिकत्वे पूर्वपदेन रूढत्वे उत्तरपदेन योगरूढिमत्त्वे पदद्वयेन च पौनरुक्त्यापत्तेः तत्त्ववाच्यत्वं लक्षयति 'रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि' त्यत्र द्वितीयकमलपदमिव कमलगुणजातम् । ततश्च शम्भुर्न केवलं प्रसूतिरहितब्रह्मादिकारणात्मत्वादपरिच्छिन्नैश्वर्यः, अपि त्वनन्यसाधारणसर्वेश्वरशब्दवाच्यत्वादपीति सर्वेश्वरश्चेत्यस्याभिप्राय इति सोपपत्तिकस्सर्वैश्वर्यानुवादः । एवमुक्तिभङ्ग्या ब्रह्मादीन् परित्यज्य शिव एव ध्येय इति निदर्शितं भवति । अमुमेवार्थमादरार्थं कण्ठोक्त्यापि स्फुटयति श्रुतिः—शिव एको ध्येयः इत्यादिना । एवमस्याः श्रुतेरर्थमुपबृंहणान्येव स्फुटयन्ति । तथा हि शिवपुराणे तावच्छिवस्य सर्वोत्कर्षनिर्धारणप्रकरणे पठ्यते—'यस्मात् सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैः सर्वैः प्रथमं सम्प्रसूयते ॥ कारणानाञ्च यो धाता ध्याता परमकारणम् । न सम्प्रसूयतेऽन्यस्मात् कुतश्चन कदाचन ॥ स सर्वैश्वर्यसंपूर्णो नाम्ना सर्वेश्वरः स्वयम् । सर्वैर्मुमुक्षुभिर्ध्येयश्शम्भुराकाशमध्यगः ॥' इति । अत्र सर्वमिदमित्यारभ्य सहभूतैरित्यन्तस्यार्थप्रदर्शके प्रथमश्लोके मूलवाक्ये अशब्दगृहीतोऽपि शिवादुत्पद्यन्तइत्ययमर्थ उत्तरवाक्यपर्यालोचनया सामर्थ्यात् सिद्ध इति सिद्धं कृत्वा यस्मादिति निर्दिष्टम् । द्वितीयश्लोकेन न कारणं कारणानां

धाता ध्यातेत्येतावदेकं वाक्यं क्रियानुषङ्गश्चेति दर्शितम् । तृतीयश्लोकेन 'नाम्ना सर्वेश्वरः स्वयमि'ति सर्वेश्वरशब्दस्य शिवनामत्वोपन्यासेन स्वयं सर्वेश्वरशब्दवाच्य इत्यनन्यसामान्यं नामैव तस्य सर्वेश्वरत्वं ख्यापयतीत्येदर्थपरत्वप्रदर्शनेन वा पुनरुक्तिः परिहृता । हरिवंशे च कृष्णकृतशिवस्तोत्रे पठ्यते—' अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्रास्सर्वे ब्रह्मणश्चातिवीराः । त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वैः कारणात्मा त्वमीड्यः ॥' इति । अत्र कपिलादिग्रहणम् 'ऋषिं प्रसूतं कपिलं यस्तमग्रे' इत्यादिश्रुत्यन्तरार्थोपसंहारेण । एवङ्कारणात्मेत्यन्वयः, कारणत्वप्रकारस्यैव प्रदर्शनात् । तथाच ब्रह्मादिकारणात्मकत्वात् त्वं सर्वेश्वरः, ततश्च सर्वैरीड्य इति कारणत्वादीनामुपपाद्योपपादकभावेनान्वयः स्फुटीकृतः । एवं ' ब्रह्मविष्ण्वग्निशक्रार्कजलभूमिपुरोगमाः । सुरासुरास्सम्प्रसूतास्त्वत्तः सर्वे महेश्वर ॥' इत्यादीनि ब्रह्माण्डपुराणादिदृष्टान्युपबृंहणान्युदाहर्तव्यानि । तदेवं श्रुतावेव ब्रह्मादिनिखिलदेवताव्यवच्छेदेन शिवस्य सर्वेश्वरत्वव्यवस्थापनात्तदधिकदेवतान्तरजल्पनं बालिशानां व्यामोहविलास एवेत्यर्थः । ननु, 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' 'इन्द्रो यातोवसितस्य राजा विश्वस्मादिन्द्र उत्तरः' 'अग्निरग्रे प्रथमो देवतानाम्' इति श्रुतिषु देवतान्तराणामप्यपरिच्छिन्नमैश्वर्यं श्रूयते । उच्यते—बहूनां विकल्पेन न सर्वेश्वरत्वसम्भवः, वस्तुनि विकल्पायोगात् । नापि समुच्चयेन, परस्परेशितृत्वापत्तेः । नापि कल्पभेदेन व्यवस्थया । सर्वेषामैश्वर्यस्य कालतः परिच्छिन्नतया न कस्यापि सर्वेश्वरत्वमिति दोषापातात् । तस्मात्तादृशेषु वचनेषु कानि चित् प्रतीतार्थपराणि, कानिचिदन्यथा नेयानीति सर्वैरभ्युपगन्तव्यम् । तत्रेदम्पराणि वचनानि प्रतीतार्थपराण्यन्यपराण्यन्यथानेयानीत्यस्मद्बुद्धिकल्पितैर्न्यायैर्व्यवस्थापनाऽयोगादुपबृंहणानुसारेण व्यवस्थापनीयानि । पुरुषबुद्धीनामव्यवस्थितमर्यादत्वेन तद्बुद्धीतैर्न्यायैस्तथाऽर्थव्यवस्थित्यसिद्धेः, 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि । ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्महात्मनाम् ॥' इति व्यासवचनाच्च । तथाचोदाहृतोदाहरिष्यमाणबहूपबृंहणदार्ढ्यादथर्वशिखायाः प्रतीतार्थपरत्वं तादृशोपबृंहणरहितानां देवतान्तरैश्वर्यविषयाणां श्रुत्यन्तराणां मानान्तराविरुद्धसंकुचिततत्तदैश्वर्यपरत्वं च युक्तमभ्युपगन्तुम् ॥१०॥

वस्तुस्थितिस्तावदियम्—यस्तु न्यायेन बलाबलविचारं विना न परितुष्यति, तं प्रति ततोऽप्यस्याः श्रुतेर्बलवत्त्वं व्यवस्थापयति—

१. एवं सर्वेशः कारणात्मा त्वमीड्यः । इति पाठान्तरम् । २. वेदार्थमुपबृंहयेत् । इति पा०

श्रुतं पूर्णैश्वर्यं क्वचिदपि हि यत्केवलमिदं
विरोधे सङ्कोचं विमलगुण शक्यं गमयितुम् ।
न युक्त्यैवङ्कारं मलिनजमुखादैवतगणा-
द्व्यवच्छिद्यैतस्यां भवति मम चिख्यापयिषितम् ॥ ११ ॥

अयं भावः–'विरुद्धयोरनन्यथासिद्धमन्यथासिद्धाद्बलवदि'ति सर्वसिद्धम् । 'हस्तेनावद्यति' इत्यादावनन्यथासिद्धलिङ्गविरोधेनातथाभूतायाः श्रुतेरपि सङ्कोचाभ्युपगमात् । अन्यथासिद्धं च देवतान्तरैश्वर्यपरमुदाहृतमन्यच्च तत्प्रकारापन्नं वचनजातम् । तद्धि चातुर्मास्यफले क्षयिष्णुत्वक्षयत्वव्यपदेशवच्छक्यं संकुचितार्थपरत्वं नेतुम् । यत्तु ब्रह्मादीनां ध्येयत्वव्यवच्छेदाय तेषु परिच्छिन्नैश्वर्यत्वं दोषमुद्भाव्य तत्परिजिहीर्षया ध्येयत्वेनोपदिष्टस्य शम्भोरपरिच्छिन्नमैश्वर्यं प्रतिपादयितुं प्रवृत्तं, तत्तु संकुचितैश्वर्यपरत्वेऽन्यत्रोद्भावितदोषपरिहारालाभेन सङ्कोचासहिष्णुत्वादस्य लोकस्य गमनगतिपरम्पराविश्रान्तिभूमित्वव्यावर्तनाय तत्रान्तवत्त्वदोषोद्भावनानन्तरं तथात्वेन प्रतिपादितस्याकाशस्य तद्दोषपरिजिहीर्षयाऽनन्तत्वप्रतिपादनाय प्रवृत्तं 'स एषोऽनन्तः' इति वाक्यमिवानन्यथासिद्धम् । अत एव तत्प्रतिपादितानन्तत्वलिङ्गस्य त्रिदशामरत्वन्यायेन नेतुमशक्यतयोपक्रमस्थत्वात् स्वतश्च बलवतीमपि भूतभेदाभिधानश्रुतिं सम्भावितवृत्त्यन्तरत्वेनान्यथासिद्धत्यविगणय्य तत्राकाशशब्दोदितः परमात्मेति निर्णीतम् 'आकाशस्तल्लिङ्गात्' इत्यत्र । यदेवमनन्यथासिद्धं लिङ्गं स्ववाक्योपक्रमस्थायाः श्रुतेरपि बाधकं, तदा का कथा तादृशं शिवैश्वर्यप्रतिपादनं देवतान्तरोत्कर्षपराणां श्रुत्यन्तराणां सङ्कोचकमिति । तदेवं बलाबले 'दैवतगणाद्व्यवच्छिद्य चिख्यापयिषितं केवलं श्रुतमि'ति दर्शिते । किञ्च यो गुणो यतो व्यवच्छिद्य यत्र प्रदृश्यते, स तयोः समान इति वा, विपरीतस्थानगतोत्कर्षापकर्ष इति वा न युक्तमभ्युपगन्तुमिति ब्रह्मादिभ्यस्तावदैश्वर्योत्कर्षः शिवस्य दुर्वारः । तथा च तस्यैव निरतिशयोत्कर्षसिद्धिः, देवतान्तराणां तेभ्योऽपकृष्टैश्वर्यत्वात्, अन्येषामैश्वर्यं तु शिवाद्व्यावर्त्य न प्रतिपादितमिति न तत्रैतादृशं बलवत्त्वम् । तदेतन्मलिनजमुखादिति विशेषणेन दर्शितम् । अपि चेह ब्रह्मादीनां परिमितैश्वर्यत्वं शिवस्यापरिमितैश्वर्यत्वं चोपपत्तिमुखेनोपन्यस्तम् । उपपत्तिश्च प्रबलं तात्पर्यलिङ्गम्, न तथाऽन्यत्र देवतान्तराणामित्यतोऽप्यस्या बलवत्त्वम् । तदिदमुक्तम्–न युक्त्येति । अस्य व्यवच्छिद्य चिख्यापयिषितमित्युभयोरप्यन्वयः । केवलं श्रुतमित्यस्यान्यत्रोद्भावितदोषपरिजिहीर्षां शिवाद्व्यवच्छेदमुपपत्त्युपन्यासं च विनेत्यर्थः । किञ्चेह शिवस्यैश्वर्यं मोक्षशास्त्ररूपतया मुमुक्षूपास्यपरदेवतानिर्धारणप्रधानायामुपनिषदि श्रुतम् । अन्येषां तु

कर्मान्वयिदेवताप्रकाशनादिप्रधानेषु मन्त्रादिष्वित्यतोऽप्यस्याः प्राबल्यम् । अपि च 'कारणं तु ध्येयः' इत्याद्युक्त्यनन्तरमिह 'समाप्ताऽथर्वशिखा' इति श्रुत्यन्तराणामिव विरामादेव ज्ञातुं शक्यायाः स्वसमाप्तेः कण्ठत उक्तिरितःपरं वक्तव्याभावस्फोरणेन प्रतिपादितस्य शिवस्य निरतिशयैश्वर्यस्येतरव्यवच्छेदेन तद्ध्यानविधानस्य च तत्त्वार्थनिष्कर्षरूपत्वं परमहितोपदेशरूपत्वं च व्यञ्जयितुमित्यतोऽप्यस्याः प्राबल्यम् । श्रुत्यन्तरेष्वेवं देवतान्तरैश्वर्योपवर्णनस्य भूतार्थवादत्वानभिव्यञ्जनादिति । तदेवं प्राबल्यद्वयमेतस्यां क्वचिदपीति ग्रहणेन ध्वनितम् । एतेन "पतिं विश्वस्यात्मेश्वरम्' इति नारायणोपनिषदि श्रवणात्, 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः' इति बह्वृचब्राह्मणे सर्वदेवतोत्कर्षोपदेशात्, लोकाक्षिगृह्ये 'अग्नये पृथिव्यधिपतये स्वाहा' इत्यारभ्य 'ब्रह्मणे लोकाधिपतये स्वाहा' इत्यन्तैर्मन्त्रैरग्निसोमवायुसूर्येन्द्रयमवरुणकुबेरमहासेनरुद्रब्रह्मणां पृथिवीनक्षत्रान्तरिक्षद्युसुरप्रेतसलिलयक्षसेनाभूतलोकानामेकैकाधिपत्यप्रदर्शनानन्तरं 'विष्णवे सर्वाधिपतये स्वाहा' इत्यसङ्कुचितसर्वाधिपत्यप्रदर्शनाच्च नारायणमूर्तावेव निरतिशयैश्वर्यविश्रान्तिः' इति मतं निरस्तम् । 'पतिं विश्वस्य' इत्यस्य 'विश्वस्मादिन्द्र उत्तरः' इत्यादेरिव सङ्कोचसहिष्णुत्वात् 'अग्निरवमो देवताना'मित्यादेराग्नावैष्णवपुरोडाशार्थवादस्य 'अग्निर्मुखं प्रथमो देवतानाम्' 'अग्निरग्रे प्रथमो देवतानाम्' 'अग्निरेतु प्रथमो देवतानाम्' 'अग्निस्सर्वा देवताः' 'राजानौ वा एतौ देवतानां यदग्नीषोमौ' इत्यादिश्रुतिभिः 'यथाऽग्निर्देवतानां स्यादृतूनां कुसुमाकरः । द्विपदां ब्राह्मणः श्रेष्ठः' इत्यादिस्मृतिभिः 'हुताशनपुरोगमाः' इत्यादिविष्णुपुराणादिलिङ्गैरुपांशुयाजदेवताविचारे 'मुख्यत्वादग्निर्देवते'ति पक्षप्रदर्शनपरेण जैमिनिसूत्रेण चाग्नेरुत्कर्षप्रतीतेः सर्वदेवतान्यूनत्वायोगादग्निरवम इत्यंशे कांश्चिद्देवताविशेषान् प्रत्यग्नेरवमत्वपरतया सङ्कुचितार्थत्वस्यासदालम्बनार्थवादरूपत्वस्य वा वक्तव्यतया तत्समानयोगक्षेमे 'विष्णुः परमः' इत्यंशेऽपि तथात्वस्य सुवचत्वात् । न चैवंसति 'ग्रहणार्थञ्च पूर्वमिष्टेस्तदर्थत्वात्' इति प्रसङ्गलक्षणे सोमाङ्गभूतास्विष्टिष्वग्न्यन्वाधानं कार्यं, न वेति संशये 'ममाग्ने वर्च इति पूर्वमग्निं गृह्णाति देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते' इति प्रकृतौ तस्य देवतापरिग्रहार्थत्वोक्तेः तास्वपि यक्ष्यमाणदेवतापरिग्रहार्थं तत् कर्तव्यमिति पूर्वपक्षे प्राप्ते 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निरवमो देवतानां विष्णुः परमो देवता एव तदुभयतः परिगृह्य दीक्षते' इति दीक्षणीयाया यक्ष्यमाणदेवतापरिग्रहार्थत्वश्रवणात्, 'दीक्षा सोमस्य' इति श्रुतेस्तस्याः प्रधानभूतसोमयागार्थत्वेऽपि वैश्वदेवग्रहे सर्वदेवतासमवायात् तत्परिग्रहं कुर्वत्या तया प्रस-

ङ्गादङ्गदेवतापरिग्रहस्यापि सिद्धेः कृतकार्यत्वान्न तासु तत् कर्तव्यमिति सिद्धान्तितस्या र्थस्याग्निरवम इत्यादेः सङ्कुचितार्थपरत्वेऽसदालम्बनार्थवादरूपत्वे वा स्थित्यसम्भवात् प्रायणीयादिष्वप्यग्न्यन्वाधानानुष्ठानप्रसङ्ग इति वाच्यम् । विहरणानन्तरमग्नीनामानुपूर्व्येण बलवदिन्धनाधानरूपस्य तस्याग्निधारणे दृष्टे प्रयोजने सम्भवति न्यायविरुद्धं वाक्यशेषमात्रमवलम्ब्यादृष्टदेवतापरिग्रहार्थत्वकल्पनायोगात् , सोमे सोमार्थं विहृतस्याग्नेर्धारितस्य सत्त्वेन प्रसङ्गसिद्धाग्निधारणरूपस्वकार्यत्वादेव तदङ्गेष्विष्टिष्वग्न्यन्वाधानाप्राप्तेः , द्वादशेऽप्युदाहृताधिकरणात् पूर्वतरे 'धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते' इत्यधिकरणे तथैव स्थितेः , उदाहृताधिकरणस्य चाविवक्षितार्थं वाक्यशेषमवलम्ब्य पुनराक्षेपे तादृशमेव वाक्यशेषान्तरमालम्ब्य तत्समाधानार्थतयाऽभ्युपेत्यवादरूपत्वस्य मीमांसकैस्तत्रैव व्यवस्थापनात् , अग्न्यवमत्वादिवचनस्य चोभयतः परिग्रहेऽपि सर्वपरिग्रहासम्भवेनाग्न्यवमत्वाद्ययोगेन चाविवक्षितार्थत्वस्य स्पष्टत्वात् , लोकाक्षिगृह्याम्नातमन्त्राणां च कृच्छ्राङ्गेषु द्वादशसु होमेषु प्रत्येकं प्रत्येकं विनियुक्तानां 'अर्थैकत्वादेकं वाक्यम् ।' इति यजुःपरिमाणनिर्णायकसूत्रोक्तन्यायेन भिन्नभिन्नवाक्यतया सम्भूय एकार्थपरत्वाभावात् प्रत्येकं चतुर्थ्यन्तानां 'पृथिव्यधिपतय' इत्यादीनामग्न्यादिविशेषणपदानां सम्भूयाग्न्यादिभ्यो व्यवच्छिद्य विष्णौ सर्वैश्वर्यव्यवस्थापने सामर्थ्याभावाच्च शिखावाक्यान्तर्गतपदानामिव केभ्यश्चिद्व्यवच्छिद्य क्वचित् सर्वैश्वर्यप्रतिपादने तात्पर्याभावात् केवलं 'विष्णवे सर्वाधिपतये' इत्यस्य बलवद्विरोधेन सङ्कोचसहिष्णुत्वात् , एषु मन्त्रेषु रुद्रातिरिक्तानामिन्द्रादीनां लोकपालत्वेन रुद्रस्यापि लोकपालत्वावगमात् , लोकपालस्य च कूर्मपुराणे मेरूपरिस्थितलोकपालपुराष्टकपरिगणनप्रस्तावे 'तस्याश्च पूर्वदिग्भागे शङ्करस्य शुभा पुरी । नाम्ना यशोवती पुण्या सर्वेषां सुदुरासदा ॥ तत्रेशानस्य भवनं रुद्राविष्टतनोः शुभम् । गणेश्वरस्य विपुलं तत्रास्ते स गणैर्वृतः ॥' इति शिवकलाविर्भावयुक्तगणनाथविशेषत्वोक्तेरिह शिवाद्यवच्छिद्य विष्णोरैश्वर्यं प्रतिपादितमिति शङ्काऽनवकाशाच्च । तस्मादथर्वशिखानुसारेण शिवस्यैव निरतिशयैश्वर्यसिद्धिरिति निरवद्यम् । अस्याः सर्वतो बलीयस्त्वात् ॥११॥

ननु, भवत्वेवमेषा बलीयसी, तथाऽप्येतत्प्रतिपाद्यः पुरुषोत्तम इति ततस्तस्यैव निरतिशयैश्वर्यसिद्धिरित्यस्तु । तथाहि परे कल्पयन्ति — अस्याः उपक्रमे प्रणवस्य तिसृणां मात्राणां पीतशुक्लकृष्णवर्णत्वं त्रिमूर्तिदैवतत्वञ्चोक्त्वा चतुर्थ्या अर्धमात्रायास्सर्ववर्णत्वं पुरुषदैवतत्वं चोक्तम् । स च पुरुषः पुरुषोत्तम एव, तस्य पुरुषशब्दाभिधेयत्वप्रसिद्धेः सर्ववर्णत्वलिङ्गाच्च तदीयविश्वरूपविग्रह-

स्य 'नानावर्णाकृतीनि च' इति सर्ववर्णत्वप्रसिद्धेः 'तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रकोपः' इत्यादिश्रुतेश्च । एवंच 'वेदो वेति' नयात् प्रबलोपक्रमस्य श्रुतिलिङ्गाभ्यां पुरुषोत्तमपरत्वनिर्णये तदनुरोधेनोपसंहारस्थाः शिवादिशब्दा योगादिना 'शाश्वतं शिवमच्युतम्' इत्यादिवत्तत्रैव वर्तयितव्याः । किंच तस्यापीशानशम्भुशिवशब्दा अभिधायकाः, तन्नामसहस्रे 'ईशानः प्राणदः प्राणः' इत्यादिपाठात् । अपिचोपसंहारेऽपि 'कारणं तु ध्येयः' इति वचनं मानान्तरसिद्धकारणानुवादेन तस्य ध्येयत्वनिर्धारणपरं, न त्विह कस्यचित् कारणत्वविधिपरम् । कश्च ध्येय इति प्रश्ने प्रवृत्तत्वात् । कारणत्वं च सुबालोपनिषदादिषु नारायणस्य सिद्धमिति कारणपदस्य तदनुवादपरतानिश्चयात्तत्समानाधिकृतशम्भ्वादिशब्दानामपि तत्परत्वमावश्यकम् । न च 'ब्रह्मविष्णुरुद्रेन्द्रा' इति विष्णोः कार्यत्वश्रवणान्न तस्य मूलकारणत्वं सम्भवतीति शङ्क्यम् । तस्य 'आदित्यानामहं विष्णुः' इत्यादिवचनसिद्धतद्विभूतिपरत्वसम्भवादिति । तत्र यद्यपि—

स्वरूपाख्यानमेवास्य प्रत्याख्यानं प्रतीयते । न्यायानां स्फुटदौर्बल्याद्विरोधाच्चोपबृंहणैः ॥ अनन्तशाखासापेक्षे वैदिकार्थविनिर्णये । स्वबुद्धिकल्पितन्यायाद्गरीयोऽप्युपबृंहणम् ॥ अथस्ताद्दर्शितं तच्च हरिवंशादिषु श्रुतम् । कुदृष्टिकृतदुश्शङ्कानिर्मूलोन्मूलनक्षमम् ॥ किंच शैवे महालिङ्गप्रादुर्भावोपवर्णने । शैवत्वमस्याः कार्त्स्न्येन प्रपञ्चेन स्फुटीकृतम् ॥ प्रणवः शतरुद्रीयं तथाऽथर्वशिरश्शिखा । एतेषां तु जपः पुत्र स्वाध्याय इति कीर्तितः ॥ इत्यादिस्त्वपुराणेऽपि शिवयोगनिरूपणे । श्रीरुद्रादिवदेवास्याः शैवत्वं प्रकटीकृतम् ॥ शैवपाराशरस्कान्देष्वनया प्रतिपादितः । शिव एवेति विस्पष्टं कण्ठोक्त्याऽप्युपवर्णितम् ॥ सर्वमन्यत्परित्यज्य शिव एव शिवङ्करः । परो ध्येयोऽधिदेवेशः समाप्ताथर्वणी श्रुतिः ॥ सर्वमन्यत् परित्यज्य शिव एव शिवङ्करः । ध्येय इत्याह परमा श्रुतिराथर्वणी खलु । शिखा त्वाथर्वणी साध्वी सर्ववेदोत्तमोत्तमा । अस्मिन्नर्थे समाप्ता सा श्रुतयश्चापरा अपि ॥ एषां तु वचसां शक्यं नान्यार्थत्वोपपादनम् । प्रस्तुत्य शिवमाहात्म्यं तत्रतत्र प्रवर्तनात् ॥ तथाऽपि ॥ न्यायेन प्रत्यवस्थानं तदाभासीकृतिं विना । न शा-

म्येदल्पबुद्धीनामुपबृंहणगौरवात् ॥ इत्थं हि ग्रहिला मूर्खा विशदार्था अपि श्रुतीः। नयन्तो व्याकुलीभावं स्थाने तु निरपत्रपाः॥ उपबृंहणजातं च सह प्रकरणादिना। साहसिक्यात्कथन्नैते नयेयुः पश्यतोहराः॥ ततो नैराश्यसिद्ध्यर्थं तेषां पण्डितमानिनाम्। समूलमुन्मूलयति न्यायाभासानुदाहृतान्—

उपक्रान्तिं साधारणगुणपदाभ्यां हरिपरा-
मनूक्त्या त्वय्यर्थादधिगमितया कारणतया।
अमुष्या निश्चिन्वन् प्रसभमुपसंहारमपि च
स्वयं मुह्यत्वेकः कथमिव तमन्येऽप्यनुगताः॥१२॥

अत्र यद्यप्युपक्रमस्थयोः श्रुतिलिङ्गयोरसाधारण्येऽपि नेहोपक्रमप्राबल्यशङ्कावकाशः, उपसंहारे ईशानशम्भुशिवसर्वेश्वरश्रुतीनां प्रबलानां चतसृणां शिवाभिधायिकानां श्रवणात्। अल्पप्रमाणादुपक्रमाद्बहुप्रमाणस्योपसंहारस्यैव बलवत्त्वात्। अत एव 'आकाशो ह वै नाम' इत्यादिवाक्यस्योपक्रमस्थाभ्यामाकाशश्रुतिप्रसिद्धलिङ्गाभ्यां पाश्चात्यानामप्यसङ्कुचितनामरूपनिर्वोढृत्वतदर्थान्तरत्वामृतत्वलिङ्गब्रह्मात्मश्रुतीनां भूयस्तया प्राबल्यात्, तदनुरोधेनोपक्रमप्राप्तमपि भूताकाशपरत्वमपोह्य ब्रह्मपरत्वं व्यवस्थापितम् 'आकाशोऽर्थान्तरत्वादिव्यपदेशा'दित्यत्र। पूर्वतन्त्रेऽपि कस्मिंश्चित् काम्येष्टिविशेषे 'ऐन्द्राग्न एकादशकपालः प्राजापत्यं दधि मधु घृतमाप' इति पञ्चानां हविषामाद्ययोः ऐन्द्राग्नसान्नाय्यविकारत्वेनामावास्यविध्यन्तप्राप्तावुपांशुयाजविकाराणां मधूदकघृतानां चरमश्रुतत्वेऽपि भूयस्तया तदनुग्रहाय पौर्णमासविध्यन्त इति निर्णीतं— 'विप्रतिषिद्धधर्मणां समवाये भूयसां स्यात्सधर्मत्वम्' इति। परैरपि 'अन्तर उपपत्तेः' इत्यधिकरणे दर्शितोऽयं न्यायः—उपक्रमस्थमेकं लिङ्गमुपरितनानेकगुणविरोधे दुर्बलमिति। एवमिहाप्युपसंहारस्थप्रमाणबाहुल्यबलादुपक्रममन्यथाकृत्वा शक्यं शिवपरत्वं व्यवस्थापयितुम्। अपिचोपक्रमानुरोधेऽप्यस्याश्शिवपरत्वमेव सिध्यति। तथाहि—मात्राणां वर्णदेवताविभागात् प्रागेव लोकादिविभागोपदेशो 'पृथिव्यन्तरिक्षं द्यौः' इति मात्रात्रयस्य लोकानुपदिश्योपदिष्टं— 'याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोकः' इति। नात्र सोमलोकशब्दश्चन्द्रलोकपरः। तस्य द्युलोकान्तर्गतत्वेन पृथग्ग्रहणायोगात्। किं तूमासहायाधिष्ठितसकलभुवनातीतमहाकैलासापरनामकशिवधर्मोत्तरादिप्रतिपादितपरमशिवपुरपरः। अत एव शैवे महालिङ्गप्रादुर्भावाध्याये अथर्वशिखामवलम्ब्य शिवमहिम-

वर्णनप्रकरणे सोमलोकशब्दविवरणं दृश्यते— 'तदूर्ध्वमुन्मनाल्लोकात्सोमलोकमलौकिकम् । सोमस्सहोमया यत्र नित्यं निवसतीश्वरः' इति । एवं चोपक्रमोपसंहारयोरैकार्थ्ये मध्यस्थं दैवतान्तरलिङ्गादिकं प्रतर्दनाख्यायिकायां जीवमुख्यप्राणलिङ्गमिवान्यथा नेयमिति, तथापि वस्तुगतिप्रदर्शनाय परपक्षस्य सर्वथोन्मूलनसिद्ध्यै च परोपन्यस्तश्रुतिलिङ्गयोः साधारण्येनानिर्णायकत्वं दर्शयति— **साधारणगुणपदाभ्यामिति** ।

**साधारणत्वमनयोः प्राकृतैरपि हि स्फुटम् । विना जात्यन्धबधिरौ सर्वैः समधिगम्यते ॥**

तथा हि—यद्यपि 'पुरुषो ह वै नारायणोऽकामयत' 'सहस्रशीर्षा पुरुषः' इत्यादिश्रुतिषु 'न यस्य देवी न पितामहो वा नेन्द्रो न चाग्निर्वरुणो न मृत्युः । प्रभावमद्यापि विदन्ति रुद्रं तमादिदेवं पुरुषो ददर्श ॥' इत्यादिपुराणेषु 'संहृत्य लोकान् पुरुषोऽधिशेते' इत्याद्यभियुक्तकाव्येषु च पुरुषशब्दस्य विष्णौ प्रयोगो दृश्यते, तथापि 'पुरुषावात्ममानवौ' इत्याद्यभिधानकोशस्मृतेर्लौकिकवैदिकप्रयोगप्राचुर्याच्चात्मसामान्ये तस्य शक्तेरावश्यकत्वेन तत एव तदुपपत्तेः न विष्णौ तस्य विशिष्यापि शक्तिः कल्पयितुं शक्या । बर्हिराज्याधिकरणविरोधात् । तत्र हि म्लेच्छैस्तृणघृतादिजातिमात्रे आर्यैः संस्कृततृणादावेव प्रयुज्यमानानां बर्हिराज्यादिशब्दानां यववराहाधिकरणन्यायेन शास्त्रस्थप्रसिद्धेर्बलवत्त्वात् संस्कारनिमित्तकत्वमाशङ्क्य शास्त्रस्थप्रयोगस्य जात्यव्यभिचारात् जातिमात्रव्यवहारस्य च संस्कारव्यभिचारादव्यभिचारिजातिशक्तिमादाय सर्वप्रयोगोपपादनसम्भवेन विरोधाभावाज्जातिवाचितैवेति सिद्धान्तितम् । उक्तञ्च तन्त्रवार्तिके— 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः । तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥' इति । एवञ्च यदा म्लेच्छगतयाऽपि सामान्यप्रसिद्ध्या सामान्यशक्तिसिद्धौ तद्वारैवार्यव्यवहारसिद्धविशेषलाभ इति न विशेषशक्तिकल्पनं, तदा का कथा प्रकृतविषये, इह सामान्यप्रसिद्धेरप्यार्यगतत्वेन दौर्बल्यशङ्काया अप्यनवकाशात् । नन्वस्तु प्रयोगान्तराणामन्यथासिद्धिः । इहैव ब्रह्मदैवत्या विष्णुदैवत्या रुद्रदैवत्येति मात्रात्रयदेवताविधानानन्तरं पुरुषदैवत्येत्यर्धमात्रादेवताविधाने पुरुषसामान्यस्य देवतात्वायोगात् त्रिमूर्तिभ्यः परस्मिन् देवताविशेषे पुरुषशब्दप्रयोगस्तद्वाचिशब्दैर्देवताविधानप्रायपाठबलात् पुरुषशब्दस्य तत्र विशिष्यापि शक्तिं कल्पयन्ननेकश्रुत्यादिप्रतिपन्ननारायणपरप्रयोगानुरोधात्तत्रैव तात्पर्यमवसाययिष्यतीति चेत्, न । सामान्यशक्त्याऽप्यभिमतविशेषपर्यवसानसम्भवे प्रायपाठमात्रस्य

गौरवपराहतशक्त्यन्तरकल्पकत्वायोगात् । 'एका देया, षड्देया, द्वादश देयाः, चतुर्विंशतिर्देया, सहस्रं देयमपरिमितं देयम् ।' इत्याधानदक्षिणाकल्पभेदश्रुतावपरिमितशब्दस्यापरिमाणे शिष्टस्येत्याद्यधिकरणे एकादितुल्यकल्पान्तरपरत्वेन स्थितस्य 'अधिकं वा स्याद्बह्वर्थादितरैस्सन्निधानादि'ति विधित्सितसङ्ख्याविशेषवाचिशब्दप्रायपाठेऽपि बहुत्वसामान्यशक्त्यैव न्यायलभ्ये सहस्राधिकबहुत्वे पर्यवसाननिर्णयात् । नन्वस्त्वेवं प्रयोगमात्रस्यान्यथासिद्धिः । तथापि 'पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः' इति पौराणिकानां तस्य तन्नामत्वेन निर्वचनमनन्यथासिद्धं विशिष्यापि शक्तिं कल्पयिष्यतीति चेत्, न । सामान्यशक्तस्यापि पुरुषशब्दस्य श्रुत्यादिषु क्वचित् प्रकरणादिसामर्थ्यान्नारायणे पर्यवसानमस्तीत्येतावज्ज्ञापनेन चरितार्थतयाऽर्थवादप्रधानपौराणिकनिर्वचनस्य चित्राधिकरणे स्तोत्रविशेषनामत्वेन सिद्धस्य पृष्ठशब्दस्य 'क्वचित् पृष्ठैरुपतिष्ठते' इत्यादौ तत्साधने रथन्तरादावपि लक्षणया प्रवृत्तिरस्तीति तन्निर्वाहेण चरितार्थस्य रथन्तरादौ पृष्ठशब्दप्रवृत्तिनिमित्तप्रतिपादनपरस्य 'आपो वा ऋत्वियमाच्छन् तासां वायुः पृष्ठे व्यवर्तत' इत्यादेः श्रौतार्थवादस्येवान्यथासिद्धत्वेनानन्यथासिद्धाभिधानकोशस्मृत्यादिवत् क्लृप्तशक्त्योपपादनीयप्रयोगविषये शक्त्यन्तरकल्पकत्वायोगात् । न हि स्तोत्रनामत्वेन सिद्धस्य पृष्ठशब्दस्य रथन्तरादावपि लक्षणायोग्ये प्रवृत्तिनिमित्तप्रतिपादनपरोऽर्थवादोऽस्तीत्येतावता तत्रापि शक्त्यन्तरमुपेयते, भगवता जैमिनिनैव सप्तमतृतीयान्ते 'पृष्ठैरुपतिष्ठते' इत्यत्र पृष्ठशब्दो माहेन्द्रस्तोत्रपरः, रथन्तरादिपरो वेति विचारे 'कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात्' इतिपूर्वपक्षसूत्रेण पृष्ठशब्दोपदेशसामान्यात् स्तोत्रक्रियापरत्वमिति स्तोत्रपरत्वस्यौत्सर्गिकत्वकथनेन सिद्धान्ते 'अभिधानोपदेशाद्वा विप्रतिषेधात् द्रव्येषु पृष्ठशब्दः स्यादि'ति स्तोत्रपरत्वेऽनुपपत्त्युपन्यासपूर्वकं रथन्तरपरत्वव्यवस्थापनेन च तत्र लक्षणायाः स्फुटीकरणात्, भाष्यकारादिभिश्च सर्वैः तत्रैकमत्येन लक्षणाव्यवहारात् । एतेन 'तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते । तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥ भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने ॥ ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः। ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ॥' इत्यादीनि परोदाहृतानि पुरुषशब्दस्य विष्णावसाधारण्यौत्सर्गिकत्वप्रतिपादनछायापन्नानि पौराणिकवचनान्यवलम्ब्य प्रत्यवस्थानमपि निरस्तम् । सर्वसम्प्रतिपन्नाया अविशेषेणात्मसामान्यशक्तेर्दुर्वारत्वेनासाधारण्यायोगात् । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इत्यसाधारण्येन गवाश्वानां पशुत्वोक्तिवदुदाहृतवचनानां स्वातन्त्र्यादिपुरुषधर्मपौ-

ष्कल्येन प्रशंसापरत्वोपपत्तेः । अन्यथा पशुत्वस्यापि गोअश्वेष्वसाधारण्यापत्तेः । 'स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः । प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपि ॥ स एव वासुदेवोऽयं साक्षात् पुरुष उच्यते । स्त्रीप्रायमितरत् सर्वं जगत् ब्रह्मपुरस्सरम् ॥' इति नारसिंहपुराणवचनेन तदसाधारण्यवचनानां प्रशंसापरत्वस्य स्फुटीकरणाच्च । तस्मान्न पुरुषशब्दस्य विष्णावसाधारणप्रयोगनिर्वचनासाधारण्यवचनैर्विशिष्य शक्तिः । यदि स्यात्, तदा 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि' 'पुरुषं कृष्णपिङ्गलम्' 'तमीशानं पुरुषं देवमीड्यम्' इत्यादिश्रुतिषु 'शूद्राः पादात्पिनाकिनः' इति प्रस्तुत्य 'पुंसां तु पुरुषः श्रीमान् ज्ञानगम्यो न चान्यथा ।' इति लैङ्गे च शिवे, 'तस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इत्यादिश्रुतिषु च संहाररुद्रे, 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः' इत्यादौ पिण्डाण्डमूलाङ्गुष्ठसमाश्रयणलिङ्गोपस्थापिते ब्रह्माण्डमूलभूताधारलोकवासिनि कालाग्निरुद्रे, 'यत्पुरुषेण हविषा' इत्यादिश्रुतिषु 'तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्तित' इति मनुस्मृतौ च ब्रह्मणि च प्रयोगात् 'यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते ।' इति लैङ्गे शिवनामनिर्वचनप्रस्तावे निर्वचनात्, 'वेदान्तेषु यमाहुरेकपुरुषम्' इत्यभियुक्तैरीशानस्य वेदान्तेषु पुरुषत्वेन प्रतिपाद्यतयाऽभिधानात्, 'स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्तस्मात्पुरुषः' इति बृहदारण्यके ब्रह्मनामत्वेन निर्वचनात्, 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥' इत्याद्यनेकपुराणेषु तन्नामत्वेनानुशासनात्, पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः । साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि च ॥' इति स्कान्दे ब्रह्मगीतासु शिवे असाधारण्यप्रतिपादनाच्च अन्यत्रापि स्यात् । तस्मादेकयाऽनेकया वा शक्त्या साधारणत्वान्न पुरुषश्रुत्या देवताविशेषनिर्णयो युक्तः । यदीह ततो निर्णयः स्यात्, तदा 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'य एषोऽक्षिणि पुरुषो दृश्यते' 'दिव्यो ह्यमूर्तः पुरुषः' 'स एतस्मात् जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इत्यादिश्रुतीनां परमते तत एव ब्रह्मपरत्वसिद्धेः, 'अन्तस्तद्धर्मोपदेशात्' 'अन्तर उपपत्तेः' 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'ईक्षतिकर्मव्यपदेशात् सः' 'शब्दादेव प्रमितः' इति तद्विचारार्थं सूत्रारम्भो व्यर्थः स्यात् । कथञ्चिदारम्भसमर्थने वा धर्मोपदेशादित्यादिना लिङ्गैर्ब्रह्मपरत्वनिर्णयोऽसङ्गतः स्यात् । प्रबलश्रुतिसद्भावे तामुपेक्ष्य लिङ्गोपन्यासस्यानुचितत्वात् । परमते ईक्षतिकर्म स परमात्मा निरुपाधिकशान्तामृ-

१. स्थावरजङ्गमम् । इति पाठान्तरम् ॥

तादिव्यपदेशादिति तद्व्यपदेशस्य हेतुतया उपन्यासात् तद्व्याख्याभूतयोन्यधिकरणस्याक्षरमिव दिव्यो ह्यमूर्त इति मन्त्रार्थः पुरुषोऽपि विषयः, ईक्षतिकर्माधिकरणस्य च ध्यायतिकर्मैवेक्षतिकर्मापि । यद्यप्यङ्गुष्ठाधिकरणसूत्रस्याङ्गुष्ठप्रमितः परमात्मा पुरुष इति तदभिधानशब्दादित्यर्थो वर्णयितुं शक्यः, तथाऽप्युक्तन्यायैस्तस्य साधारण्यं मन्वानैर्भगवत्पादैः शब्दादीशानशब्दादित्येव व्याख्यातम् । परभाष्यकृताऽपि 'ईशानो भूतभव्यस्ये'ति परमात्मवाचिशब्दादित्येव व्याख्यातम् । परभाष्यव्याख्यानेऽप्युक्तमीशानशब्दस्यैव शब्दशब्देन विवक्षितत्वादिति । किं च तन्मते स्वप्नसृष्टिर्जीवकर्तृकेति पूर्वपक्षोपमर्देन परकर्तृकेति निर्णयार्थं प्रवृत्ते 'सन्ध्ये सृष्टि'रित्यधिकरणे 'निर्मातारं चैके' इति सूत्रव्याख्याने 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति वाक्यमुदाहृत्य पूर्वपक्षोपपादनं कृतं, तदप्यत्यन्तमसम्बद्धं स्यात् । न हि सिद्धान्तोपपादिन्येव श्रुतिः पूर्वपक्षोपपादिनी भवति । ननु, वैश्वानराधिकरणे 'शब्दादिभ्योऽन्तःप्रतिष्ठानाच्चेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते' इति सूत्रे 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति पुरुषश्रुत्या वैश्वानरस्य परमात्मत्वं निर्णीतम् । सत्यं, न तत्र पुरुषशब्दो ब्रह्मण्यसाधारण इति ततो निर्णयोऽभिमतः, तथासत्यत्रैव क्रियमाणायाः पुरुषान्तःप्रतिष्ठितत्वलिङ्गेन वैश्वानरस्य जाठरत्वशङ्काया निरालम्बनत्वापातात् । किंत्वग्न्यादिशब्दपुरुषान्तःप्रतिष्ठितत्वादिलिङ्गैः स जाठर इति शङ्किते तस्य त्रैलोक्यशरीरत्वासम्भवान्न स जाठर इत्युक्त्वा तन्निराकरणाय हेत्वन्तरमुपन्यस्तं—पुरुषमपीत्यादिना । चेतनवाचिपुरुषशब्दश्रवणान्नाचेतनो जाठरस्स इति तदभिप्रायः । स च प्रधाननिराकरणायोपन्यस्तेक्षितिलिङ्गवत्सर्वचेतनसाधारण्येऽपि शङ्क्यमानपक्षान्तरव्यावर्तनक्षमत्वाद्युक्त एव । ननु, 'अत एव न देवता भूतञ्च' इत्येतत्सूत्रोक्तं हेतुं परामृश्य तेनैवाग्न्यभिमानिदेवतात्वमपि तस्य निराकृतम् । सत्यं, तत्र अत एव इत्यसम्भवादिति हेतुमात्रं परामृश्यते, विभक्त्यैकरूप्यात्, 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्' इत्यत्र स इत्यनेनैव प्रजापतिः । उभयपरामर्शे वा भूतत्वनिराकरणमात्रान्वयिनी पुरुषश्रुतिरस्तु । भगवत्पादैर्लिखिते 'पुरुषविधमपि चैनमधीयत' इति पाठान्तरे तु न कोऽपि शङ्कालेश इत्यलं प्रपञ्चेन । एवं लौकिकवैदिकानेकवस्तुसाधारण्यात् श्रीसदाशिवमूर्तौ प्रतिमुखं वर्णभेदप्रसिद्ध्या शिवस्यापि सर्ववर्णविग्रहसद्भावात्तस्य विश्वरूपविग्रहस्यापि तादृशस्य पाद्मादिषु प्रतिपादनाच्च न सर्ववर्णत्वलिङ्गादपि निर्णयप्रत्याशा । अपि च

'गीतासु वासुदेवेन यत्पार्थाय प्रदर्शितम् । रूपं निर्वर्णितं तच्च शैवमेव प्रतीयते ॥' 'दर्शयामास पार्थाय परमं रूपमैश्वरम्।' इति तत्रैव तस्यैश्वरत्वकीर्तनात्तद्रूपमास्थितेन कृष्णेन 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्।' इति विपक्षाणां प्रत्यक्षनिहननात् प्रागेव स्ववीर्यप्रभावविनिहतत्वमुपवर्ण्य समयान्तरे स्वरूपमास्थितेन मोक्षधर्मेषु पार्थं प्रत्येव 'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून् । अप्रमेयप्रभावं तं देवदेवमुमापतिम् ॥ भजस्व नित्यं प्रयतो विश्वेशं हरमव्ययम् ।' इति तेषां शिववीर्यप्रभावनिहतत्वोपदेशेन तस्य रूपस्य शैवत्वव्यक्तीकरणाच्च। कथं कृष्णेन शैवं रूपमात्मीयतया प्रदर्शितमिति सङ्गच्छत इति चेत्, को भावः, किं भेदान्न सङ्गच्छत इति, नैतद्युक्तम् । लैङ्गे दधीचेन महर्षिणा शैवं विश्वरूपं योगप्रभावात् प्रदर्शितमिति प्रतिपादनात्, इहापि 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।' इति वचनादस्याश्च योगप्रभावादेव प्रदर्शितमिति कल्पनोपपत्तेः । वस्तुतस्त्वभेदस्यैव वैदिकमर्यादासिद्धत्वात् गिरिराजाय पार्वत्येव अभेदादैश्वरं रूपमात्मीयतया प्रदर्शितमित्येव सङ्गच्छतेतराम् । न हि स्वकीयमेव रूपान्तरं प्रदर्शितमिति कल्पने काचिदनुपपत्तिः । तथासति तस्याद्यवैष्णवरूपत्वकल्पनेऽप्यसंगतितादवस्थ्यापत्तेः । कृष्णस्य तत्र शैवरूपप्रदर्शने का प्रसक्तिरिति चेत्, तव वैष्णवरूपप्रदर्शने या प्रसक्तिः, सैव । तथाहि प्राक्तनप्रबन्धेन कृष्णस्य सकलसृष्टिसंहारादिस्वातन्त्र्यलक्षणं महिमजातं तन्मुखादवधारितवतः, 'इमं विवस्वते योगमि'त्यध्याये 'अवरं भवतो जन्मे'त्यादिप्रश्नोत्तरसामर्थ्येन सर्वमेतन्महिमजातं कृष्णेन स्वस्य किञ्चिदाद्यं सर्वोत्तरं रूपं सिद्धवत्कृत्य तदभिप्रायेणोच्यत इति निश्चितवतः पार्थस्य 'भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया । त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ एवमेतद्यथात्थ त्वमात्मानं परमेश्वर । द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥' इति तदीयदिव्यरूपप्रदर्शनप्रार्थनं हि विश्वरूपप्रदर्शने कारणम् । तथा च यदेव तस्य पूर्णैश्वर्यशालि सर्वोत्तममाद्यं रूपं, तदेव तस्मै प्रदर्शनीयमिति शैवस्यैव रूपस्य तथाभूतत्वात् तदेव भक्तवत्सलो भगवान् वासुदेवः प्रादर्शयदिति किन्न सङ्गच्छते । यदि तु 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥' इत्यादिप्राचीनकृष्णवचनस्थमहेश्वरादिशब्दश्रवणादग्रे गीतार्थविचारे वक्ष्यमाणगमकजाताच्चैश्वरमेव कृष्णस्य मूलभूतं परं रूपमिति विशिष्यापि निश्चित्य

द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तमे'ति तत्सदर्शनं पार्थः प्रार्थयतेति कल्प्यते, तदा नैवात्र कश्चिदुपपादनीयलेशः । तदेवं गीतोपवर्णितविश्वरूपविग्रहस्यापि शैवत्वप्रतीतेः कथमपि नोक्तलिङ्गेन विष्णुपरत्वनिर्णयः । या तु 'तस्य हैतस्ये' त्यादिश्रुतिरुदाहृता, साधिदैविकाध्यात्मिकभेदभिन्नामूर्तब्रह्मरूपवाय्वाकाशरसभूतव्यष्टिसमष्ट्यात्मककारणरूपविषयवासनाभेदप्रतिपादनपरतया सोपपत्तिकं भगवत्पादैः बृहदारण्यकभाष्ये व्याख्यातेति न तया प्रत्यवस्थानं सावकाशम् । पराभिमतार्थेऽपि पुरुषो नारायण इत्यत्र न निर्णायकं पश्यामः । वस्तुतस्तु याऽवसानेऽस्य चतुर्थ्यर्धमात्रा, सा सर्ववर्णेति सर्ववर्णत्वं ध्यानार्थमर्धमात्रागुणत्वेनैव श्रुतं, न तद्देवतागुणत्वेनेति न तेन तद्देवताविशेषनिर्णयचोद्यावकाशः । तस्मादुदाहृतश्रुतिलिङ्गयोस्साधारणत्वादनिर्णीतार्थस्योपक्रमस्य 'सन्दिग्धे तु वाक्यशेषादि'ति न्यायेन शिवादिशब्दैः निर्णीतार्थेन उपसंहारेणैवार्थनिर्णयो युक्तः । यत्तु तेषामपि विष्णुवाचित्वं शङ्कितं, तन्न तावत्तत्र प्रयोगमात्रात्, वृत्त्यन्तरोच्छेदापत्तेः । नापि तन्नामसु परिगणनात्, कोशेष्वदर्शनात्, सार्वात्म्याभिप्रायेण वा 'यानि नामानि गौणानी'त्युपक्रमे भूमलिङ्गसमवायान्यतरेण नाम्नां गौणत्वोक्त्या क्रतुपरश्येनादिनामवत् गौणनामत्वाभिप्रायेण वा नामसहस्रमध्ये अनेकदेवतान्तरनामपरिगणनदर्शनेन तस्य तद्वाचित्वे प्रमाणाभावात् । अन्यथा भारतलैङ्गादित्यपुराणादिपठितशिवनामसहस्रेष्वनन्तभूतविष्णुनामासम्भवात् 'नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा ॥' इति हरिवंशे कैलासयात्रायां शिववचनेन सर्वेषां विष्णुनाम्नामन्येषां चोत्कृष्टनाम्नां हिमकरनाम्नां घनसारनामत्ववत् शिवनामत्वस्य सिद्धेश्च क्वचिदपि नाम्ना विष्णुपरत्वनिर्णयो न स्यात् । किं च शिवं प्रस्तुत्य 'सर्वाणि ह वा एतस्य नामधेयानी'त्याश्वलायनस्मरणात् अभिधानश्रुत्या वस्त्वन्तरनिर्णय एव लुप्येत । तस्मादुदाहृतशब्दानां कोशेषु शिवनामसु परिगणनात् लौकिकवैदिकव्यवहारैकमत्याच्च तन्नामत्वनिश्चये व्यवस्थितार्थोपसंहारानुरोधेन उपक्रमेऽर्धमात्रावाच्यत्वेन प्रतिपन्नः पुरुषश्शिव एवेति युक्तम् । अत एव तस्यार्धमात्रावाच्यत्वं प्रतिपादितं शिवधर्मोत्तरे—'अथवान्यप्रकारेण ब्रह्मविष्णुमहेश्वराः । क्रमान्मात्रास्समुद्दिष्टाः तत्परश्चार्धमात्रया । भावनामात्रगम्यत्वात् विचिन्त्यः परमश्शिवः ॥' इति । वायुसंहितायामपि प्रणवमात्रात्रयस्य वेदगुणमूर्तित्रयविभागं प्रदर्श्यानन्तरमभिहितम्—'एवं तिसृभिरेवैतन्मात्राभिरखिलं त्रिधा । अभिधाय शिवात्मानं बोधयत्यर्धमात्रया' इति ॥ तदेवमुपक्रममवलम्ब्य प्रत्यवस्थानं निराकृतम् । 'कारणं तु ध्येय' इत्यत्र यच्चोदितं, तत्राह—अनूक्त्येति । अयं भावः—'अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यादि'त्यत्र 'त्रिः प्रथ-

मामन्वाह त्रिरुत्तमा'मिति प्रथमोक्तनशब्दयोः प्रथमोपस्थितप्राथम्यादिस्थानातिक्रमेण तदुपलक्षितप्रवोवाजादिऋत्विग्विशेषपरत्वस्येवात्र कारणशब्दस्य प्रथमोपस्थितकारणत्वधर्मातिक्रमेण तदुपलक्षितदेवताविशेषपरत्वस्याभावात् । कारणत्वमात्रपरत्वस्थितौ तस्य प्रतियोगिसापेक्षार्थस्य 'सहस्रं देयमपरिमितं देय'मित्यत्रापरिमितशब्दस्य बहुत्वार्थस्य सन्निहितसहस्रापेक्षया बहुत्ववत् सन्निध्युपवर्णितकार्यभावानां ब्रह्मविष्णुरुद्रादीनां कारणे पर्यवसानात् ब्रह्मविष्णुरुद्रशब्दैः स्वरसतः प्रतीयमानानां गुणमूर्तीनां त्रयाणां कारणत्वेन श्रुत्यन्तरेऽपि शिवादन्यस्य प्रतिपादनादर्शनात् कथंचित्सर्वकारणत्वादिप्रतिपादनाभावेन तत्र तत्सिद्ध्युपगमे इहैव ब्रह्मादीनां प्रसूत्युक्त्यन्तर्भावेन सिद्धस्य तत्कारणसामान्यस्य सत्त्वात् । समनन्तरवाक्यसिद्धस्यैवानुवादसम्भवेन श्रुत्यन्तरमुखनिरीक्षणायोगात् ध्यायीतेशानमिति ध्येयविशेषस्य प्रागेव निर्धारितत्वेन सोपपत्तिकं पुनस्तदर्थोपसंहारपरेऽस्मिन् वाक्ये ध्यानविषयपरस्य शब्दस्य देवतान्तरविषयत्वकल्पनस्यात्यन्तानुचितत्वात् कथंचिदस्यैव वाक्यस्य ध्येयविशेषनिर्धारणपरत्वकल्पनेऽपि समानाधिकृतशम्भ्वादिपदस्वारस्याविरोधाय समनन्तरवाक्यसिद्धकारणानुवादस्यैव युक्तत्वात् अभ्युदयेष्टिवाक्ये चरुत्वस्येव सामर्थ्यसिद्धस्याप्यनुवादसम्भवाच्च उदाहृतश्रुत्यर्थकथनप्रस्तावोपवर्णितेन सामर्थ्येन शिवरूपेणावगमितं समनन्तरवाक्यसिद्धमेव कारणमिह कारणशब्देनानूद्यते, न श्रुत्यन्तरसिद्धमिति ॥१६॥

किं च यदि कारणमत्रान्यश्रुतिसिद्धमनूद्यते । न पूर्ववाक्यसामर्थ्यपरिप्राप्तमिति ग्रहः ॥ तथापि न कुदृष्टीनां सफला प्रत्यवस्थितिः । श्रुत्यन्तरे शिवस्यैव कारणत्वव्यवस्थितेः ॥ इत्याशयेनाह—

**जडानीशौ नैव प्रभवत इति ब्रह्म जगतां**
**निदानं निश्चित्य त्वथ विमृशतां किं नु तदिति ।**
**महादेव्या दृष्ट्या त्वमिति मतिरासीद्यमवताम्**
**इति त्वाह श्वेताश्वतरनिगमान्तश्शिवपरः ॥ १७ ॥**

श्वेताश्वतराणां मन्त्रोपनिषदुपक्रमे 'ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठा । अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥' इति केषाञ्चित् ब्रह्मवादिनामृषीणां ब्रह्म जगन्मूलकारणमित्येतावन्निश्चितवतां कारणभूतं ब्रह्म को देव इति विशिष्याबुध्यमानानां कारणं ब्रह्म किमित्यादिरूपान् संशयान् प्रदर्श्य 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ।' इत्यारभ्य 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव

एकः।' 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं हरते विश्वमीशः।' इत्यादिभिस्तैर्निर्णीतमर्थं प्रदर्शयद्भिर्मन्त्रैः कालाद्यवान्तरकारणबृन्दस्याधिष्ठाता हरेशादिशब्दवाच्यो भगवान् परमशिव एव कारणं ब्रह्मेति स्फुटीकृतम्। ननु, 'क्षरं प्रधान'मिति मन्त्रे हरशब्दस्य न क्षराक्षरेश्वरदेवताविशेषसमर्पणपरत्वेनान्वयः, किं तु 'संयुक्तमेतत्क्षरमक्षरं चे'त्यादिमन्त्रश्रुतक्षराक्षरशब्दार्थबुभुत्सायां क्षरं प्रधानमिति क्षरशब्दविवरणानन्तरं अक्षरशब्दार्थविवरणवाक्ये विधेयपरत्वेन। अन्यथा तद्वाक्यापरिपूर्तेः। न चामृताक्षरमिति पदद्वयसत्त्वादमृतपदेनाक्षरपदाविवरणं क्रियत इति तत्परिपूर्णमिति वाच्यम्। समासपदस्यैकप्रसरेण विशिष्टैकार्थबोधनस्वभावस्य उद्देश्यविधेयोभयपरत्वे प्रसरभेदेन सामर्थ्यविघातात्समासासम्भवप्रसङ्गात्। अत एव 'पशौ त्र्यङ्गैः स्विष्टकृतं यजती'त्यत्र त्र्यङ्गपदस्य समस्तस्य प्रधानहविर्भूतहृदयाद्यङ्गानुवादेन त्रित्वविधायित्वं न सम्भवतीति त्रित्वविशिष्टाङ्गान्तरविधायित्वं निर्णीतम् 'इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवदि'त्यधिकरणे। उच्यते—अमृताक्षरमिति नेदं समासपदम्। एकार्थयोः पदयोः विशेषणविशेष्यभावायोगेन समासस्यैव तावल्लक्षणविरुद्धत्वात्। न चामृताक्षरमिति विवरणीयानुवादो युक्तः। सन्निहितमन्त्रान्तरश्रुताक्षरशब्दार्थस्यैव बुभुत्सितत्वात्। नापि हरशब्देन तद्विवरणं युक्तम्। तस्य शिवे रूढत्वात्। जीवप्रतिपादनक्षमेण हि शब्देनेह विवरितव्यम्। नियम्ययोः प्रधानपुरुषयोर्नियन्तुरीश्वरस्य च पूर्वोत्तरमन्त्रसन्दर्भे उपन्यासदर्शनात् 'क्षरं माया चाक्षरं जीवरूपं क्षरात्मानावीशते देव एकः॥' इति ब्रह्मगीतोपबृंहणाच्च। न हि हरशब्दो जीवे दृष्टप्रयोगः। कथञ्चिदवयवार्थकल्पनेऽपि उत्तरत्रान्वयेन शक्यसमर्थनाया रूढेस्त्यागायोगात्। तस्मादसम्बद्धोऽयं प्रलापः 'अमृताक्षरं हर इत्युद्देश्यविधेयभावेनान्वय'इति, किंत्वमृतेति भिन्नं पदं, 'नारायणपरं ब्रह्मे'त्यत्र नारायणपदमिव 'तृतीयातत्कृतार्थेने'तिसूत्रे तत्कृतपदमिव च 'सुपां सुलुगि'त्यादिसूत्रेण लुप्तविभक्तिकं जीवपरम्। 'क्षरं त्वविद्या ह्यमृतन्तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः॥' इत्यस्यामेव श्रुतौ तत्र तस्य दृष्टप्रयोगत्वात्। 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत' इति श्रुत्यन्तरे तत्र तदर्थसद्भावोक्तेश्च। तेन च बुभुत्सिताक्षरशब्दार्थविवरणं क्रियते। क्षरशब्दस्तु क्षराक्षरेश्वरदेवताविशेषनिर्धारणपरत्वेनोत्तरत्रान्वेतीति युक्तः पन्थाः॥ उपबृंहणमपि वायुसंहितायां तथैव दृश्यते— 'यच्चेदं क्षरमव्यक्तं यच्चाप्यमृतमक्षरम्। तावुभौ यः क्षरात्मानाविको देवस्स्वयं हरः॥ ईशते तदभिध्यानात् योजनात्तत्त्वभावतः॥' इत्यादि। यदि चामृताक्षरमिति समासपदं, तथाप्यमृतशब्देनैवाक्षरशब्दविवरणमिति न तत्र हरशब्दान्वयः। 'सप्तदशारत्नि-

वाजपेयस्य यूप' इत्यत्र यूपपदमुख्यार्थतानुरोधात् समासपदेऽप्यरत्न्युद्देशेन साप्तदश्यविधिस्वीकारात् इहापि हरपदमुख्यार्थताद्यनुरोधाज्जगत्कारणे ब्रह्मण्युपक्षिप्तविशेषसंशयव्युदासलाभाय हरपदस्योत्तरत्र देवताविशेषसमर्पणपरत्वेनान्वयस्यावश्यकत्वाद्गत्या असमर्थसमासाभ्युपगमो न दोषः । स्यादेतत् , नात्र कारणं ब्रह्म ब्रह्मादिदेवानां मध्ये को देव इति संशयं प्रदर्श्य देवतान्तरकारणत्ववादनिरासपूर्वकं शिव एवेति निर्धारणं क्रियते, किं तु जगत्कारणं वस्तु ब्रह्म वा, ततोऽन्यत्कालादिकं वेति प्रथममन्त्रेण संशयं प्रदर्श्यानन्तरं ब्रह्मैव कारणमित्येतावन्निर्णीयते । 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माप्यनीशस्सुखदुःखहेतोः' इति द्वितीयमन्त्रे कालादिकारणवादनिरासदर्शनात् , अन्यथा देवतान्तरकारणवादस्यैव कोट्यन्तरस्य निरसनीयतया तदसाङ्गत्यापत्तेः । तस्मात् ब्रह्म जगत्कारणं, न कालादिकमित्येतावत एवेह व्यवस्थापनेन कारणस्य ब्रह्मणो देवताविशेषरूपत्वस्यानिर्दिधारयिषितत्वात् न तदनुरोधेनोत्तरत्र हरशब्दान्वयसिद्धिः । उच्यते— नात्र यत्कारणभूतं वस्तु, तत् ब्रह्म, कालादिकं वेति विमर्शो दर्शितः । द्वितीयकोटेरश्रवणात् । संशयवाक्यं हि सामान्यतस्सम्भावितयावत्कोट्युपस्थापनक्षमकिंशब्दमात्रघटितं वा स्यात् । यथा कोऽयं वृक्ष इति, विशिष्य तत्तत्कोटिपरशब्दविशेषघटितं वा, यथा अयं वृक्षश्चूतः पनसो वेति, विशिष्यैककोटिमात्रोपन्यासस्तु व्युत्पत्तिविरुद्ध इति समभिव्याहृतब्रह्मपदान्वयलाभाय कोट्यन्तराध्याहारस्तावदवर्जनीयः । किं यज्ञदत्त इतिवदुत्कटकोटिकसंशयवाक्यरूपत्वे कुतस्स्म जाता इत्यादिकोट्युत्कटत्वशून्याग्रिमविमर्शवाक्यानामनाञ्जस्यापत्तेः । अपिचात्र किंशब्दः कोऽयं पुरोवर्ती स्थाणुः पुरुषो वेत्यत्रेव तथातथाविकल्प्यमानधर्मिपर्यन्तो वा, किमयं स्थाणुः, उत पुरुष इत्यत्रेव विकल्पमात्रपरो वा । आद्ये सामान्यतो विमर्शवाक्यमेकं विशिष्य कोटिद्वयविमर्शपरं वाक्यमन्यदिति प्रतीतैकवाक्यताभङ्गः, विशिष्य प्रदर्शितकोटिद्वयस्य वैकल्पिकत्वप्रत्यायकवाकाराद्यध्याहारापत्तिश्च । द्वितीये 'कुतः स्म जाता' इत्यादिधर्मिपर्यन्तकिंशब्दान्तरप्रायपाठाननुरोधः , पक्षद्वयेऽपि विशेषविमर्शवाक्यस्यातादृशविमर्शवाक्यान्तरप्रायपाठाननुरोधश्च । अग्रे कालादिकारणवादनिरासान्यथानुपपत्तिबलात्कारणं ब्रह्म, कालादिकं वेति विमर्शवाक्यस्य कल्पनीयतया सर्वमिदं न दोषायेति चेन्न । तस्यैव तत्कल्पनापरिपन्थित्वात् । तथाहि —'ते ध्यानयोगानुगता अपश्यन्' इत्यादिस्तदनन्तरपठितमन्त्रः स्वतो निर्णयाशक्तानां तेषां तन्निर्णयाय देवताध्यानानुष्ठानं श्रावयतीति ततः प्रागेव सं

शयविषयकोट्यन्तरदूषणस्फुरणे कथं तत्सङ्गच्छेत । न च सन्दिहानानां तन्निर्णयार्थध्यानकोट्यन्तरनिरासयोः पौर्वापर्यनियमात् क्रमे कोपाधिकरणन्यायेन पाठक्रमादर्थक्रमस्य बलवत्त्वात् । 'एतस्माज्जायते प्राणः' इत्यादिमन्त्रे प्राणादिजन्म खादिजन्मादिवत् देवताध्यानात् परकोट्यन्तरनिरासः कल्प्यत इति वाच्यम् । अन्योन्याश्रयापत्तेः । न हि कालादिकारणवादस्य कोट्यन्तरत्वं तन्निरासस्य ध्यानानन्तरत्वकल्पनं विना सिध्यति । किं च यदि कारणधर्मिकविशेषसंशयकोट्यन्तरनिरासार्थः'कालः स्वभाव' इति मन्त्रः, तदा यदृच्छापक्षस्यानुपपत्तिः । 'न किञ्चित्कारणमस्ती'ति पक्षो हि यदृच्छापक्षः । किं च कारणस्य संशयात् प्रागेव चेतनत्वसम्प्रतिपत्त्यभावे अचेतनस्य तस्याधिष्ठातृत्वासम्भवात् अधिष्ठिताः केनेति विमर्शानुपपत्तिः । तस्मात् सामान्यतो ब्रह्म कारणमित्येतावन्निश्चितवतां किं कारणं ब्रह्मेति सम्भावितसकलकोटिविकल्पविशेषितधर्मिपरेण किंशब्देन कारणं ब्रह्म विष्ण्वादिदेवानां मध्ये को देव इति विमृशतां जगतोऽकारणकत्वस्यान्यकारणकत्वस्य वोपपत्तौ ब्रह्म कारणमित्येतावदेव सिद्धमिति संशयस्य निरालम्बनत्वप्रसङ्गो मा भूदिति पक्षद्वयस्यापि निरासः निर्णयार्थध्यानात् प्रागेवेति तदभिप्रायवर्णनं युक्तम् । तदेतत् सर्वं मनसि कृत्वा कालादिकारणत्वनिरासस्य संशयधर्म्युपपादनपरतयान्वयो दर्शितः—जडानीशौ नैव प्रभवत इतीति । ननु, युक्तमेतदेवं कालादिकारणवादनिरासाभिप्रायवर्णनं, तथापि कारणं ब्रह्म को देव इति न विमर्शः, किं त्वद्वितीयस्य सकलसहकारिविधुरस्य ब्रह्मणः कथं कारणत्वं समर्थनीयमित्यभिप्रायेण ब्रह्म जगदुत्पत्तौ साध्यायां किमुपकरणकमिति । एवं च तेषां ध्यानानन्तरं तदीयाविद्याशक्तिदर्शनोपन्यासस्सङ्गच्छते । ब्रह्मणो जगत्सृष्टौ किं सहकारीति सन्दिह्य स्वयं निर्णयाशक्त्या ब्रह्म ध्यायतां तत्प्रसादादघटितघटनापटीयसी मायाशक्तिस्सहकारिणीति तेषां निर्णय आसीदिति तात्पर्यवर्णनास्यात् । अन्यथा त्वत्र मायाशक्तिदर्शनोपवर्णनमसङ्गतमेव स्यादिति, उच्यते—एवं सहकारिविचारपरत्वकल्पनायां कारणपदं तावत् सहकारिलक्षकं कल्पनीयं स्यात् । कुतः स्म जाता इत्यादिविमर्शाश्च नोपपद्येरन् । यदि कारणसामान्योपगमपूर्वकं तत् ब्रह्मान्यद्वेति संशय इति कल्प्येत, यदि वा कारणं ब्रह्मेत्यभ्युपगमपूर्वकं तत् शिवो वा, देवतान्तरं वेति, तदा ते ब्रह्मणोऽन्यस्माद्वा वयं जाता इत्यादिप्रकारेण वा शिवात् देवतान्तराद्वा वयं जाता इत्यादिप्रकारेण वा युज्येरन् । ब्रह्म सकलजगज्जननजीवनादिकारणमिति निश्चये तद्विशेषजिज्ञासानुदये च तत्सहकारिमात्रं जिज्ञासमानानां कः कुतस्स्म जाता इत्यादिविचारस्य प्रसङ्गः । तत्र किंसहकारिका-

दित्यादिव्याख्याने बह्वी क्लिष्टकल्पना । अग्रे मायाशक्तिदर्शनोपवर्णनं त्वसिद्धम् । ब्रह्मविद्याधिदेवतायाः पराशक्तेः अम्बिकायाः प्रसादाद्विमृश्यमानार्थनिर्णयो भविष्यतीत्यभिप्रायेण तां ध्यायतां तेषां तत्साक्षात्कारोपवर्णनपरत्वात् 'ते ध्यानयोगानुगता' इत्यादिमन्त्रस्य । अत एव तत्र शक्तिशब्दस्याविद्यासाधारण्यात् तद्ग्रहणं माभूदिति आत्मेति विशेषणम् । अम्बिका हि देवस्य चन्द्रमौलेरात्मभूता शक्तिः । 'आचक्षते तयोर्भेदमज्ञानात्परमार्थतः । अभेदश्शिवयोस्सिद्धो वह्निदाहकयोरिव ॥' इति स्मरणात् । अविद्या तु तस्यानात्मभूता, मिथ्यात्वात् । उक्तं च संक्षेपशारीरके—'चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते सत्येवास्य जडा परा भगवतश्शक्तिस्त्वविद्योच्यते ॥' इति । न च आत्मपदस्य देवपदेन कर्मधारये शक्तिपदस्याविद्यापरत्वमपि सम्भवतीति शङ्कनीयम् । तदा 'दीर्घसोमे सन्तृद्ये धृत्यै' इत्यत्र सोमपदस्य प्रकृते ज्योतिष्टोमे वृत्तौ समानाधिकरणस्य दीर्घपदस्येव 'स्वेन रूपेणाभिनिष्पद्यते' इत्यत्रात्मीयपरत्वे स्वेनपदस्येव चेहान्यतरस्य पदस्याव्यावर्तकतया वैयर्थ्यापत्तेः, विशेषणविशेष्यभावासम्भवेन कर्मधारयानुपपत्तेश्च । न च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचन'मिति वार्तिकस्य 'वाक्त्वचप्रियः चित्रगवधन' इत्यादिसमासकृतवैरूप्यसम्भवस्थलविषयत्वात् बृहद्रथन्तरसाम्ना कार्यं इतिवदिह विनैवावयवतत्पुरुषम् अनेकपदसमास इति शङ्कितुं शक्यते । अबहुव्रीहित्वात् 'अनेकमन्यपदार्थे' इति बहुव्रीहावेवानेकग्रहणेनानेकपदसमासज्ञापनात्, कथञ्चित्साधुत्वसम्भवेऽपि वैयर्थ्यस्य वज्रलेपायितत्वाच्च । किं च 'ईक्षाध्यानयोरेकः कार्यकारणभूतयोर्थ औत्सर्गिक' इति ईक्षतिकर्माधिकरणोक्तरीत्या दर्शनध्यानयोः कार्यकारणयोरेकविषयत्वं वक्तव्यम् । न च तदुपपद्यते । दर्शनस्याविविद्याविषयत्वपक्षे इदानीं सहकारिणि सन्दिहानानां तस्मिन् सहकारित्वनिर्णयो भविष्यतीति अनवगच्छतां जडशक्तिविषयमेव निर्णयरूपं ज्ञानमुद्दिश्य तद्ध्याने प्रवृत्त्ययोगेन ध्यानं ब्रह्मविषयमिति वक्तव्यत्वात् । तस्मादम्बिकाप्रसादादस्माकमयमर्थो निर्णीतो भविष्यतीत्यभिप्रायेण प्रत्यक्षीकरणाय तां ध्यायन्तस्तामपश्यन्नित्येतदर्थपरः 'ते ध्यानयोगानुगता' इतिमन्त्रः । तत्कृपाकटाक्षमहिम्ना परं कारणं महादेवमपश्यन्नित्येतदर्थपरो 'यः कारणानी'त्याद्यनन्तरमन्त्रसन्दर्भ इति युक्तम् । तदेतत्सर्वमभिप्रेत्योक्तं—**महादेव्या दृष्ट्या त्वमिति मतिरासीद्यमवतामिति** । यमवतां यमाद्यङ्गकं योगमास्थितानामित्यर्थः । महादेव्या इति कर्मणि कर्तरि वा षष्ठी । ततश्च तद्दर्शनात्तत्कृपाकटाक्षादिति वार्थः । एवमेषां मन्त्राणामर्थनिष्कर्षः कूर्मपुराणे संक्षिप्य स्पष्टीकृतः—'समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः । वितेनिरे बहून्वादानात्मविज्ञानसंश्रयान् ॥ किमस्य जग

तो मूलमात्मा वास्माकमेव हि । कोऽपि स्यात्सर्वभूतानां हेतुरीश्वर एव च । इत्येवं-मन्यमानानां ध्यानकर्मावलम्बिनाम् ॥ आविरासीन्महादेवी गौरी गिरिवरात्मजा ।' इत्यारभ्य 'निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम् ॥' इत्यादिना । अत्र किमस्य जगतो मूलमिति किं कारणं ब्रह्म कुतस्स्म जाता इत्येतदर्थो दर्शितः । 'आत्मा वास्माकमेव ही' ति दर्शितः 'जीवाम केन' इत्यादिविमर्शजातार्थः । आत्मशब्दस्याधिष्ठातृपरत्वात् । 'कोऽपि स्यादि'त्यादिना 'कालस्स्वभाव' इत्यादिमन्त्रप्रतिपादितकालकारणत्वादिवादनिराससामर्थ्यसिद्धसर्वकारणत्वसर्वेश्वरत्वविशिष्टपुरुषसंप्रतिपत्त्युपन्यासेन संशयानां ब्रह्मधर्मिकत्वं स्पष्टीकृतमित्यादि व्यक्तम् । शिवपुराणेऽप्यम्बिकामाहात्म्यं प्रस्तुत्य 'मुमुक्षया पुरा केचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसो विमृशन्ति यथातथम् । किं कारणं कुतो जाता जीवामः केन वा वयम् । क्व चास्माकं सम्प्रतिष्ठा केनवाधिष्ठिता वयम् । केन वर्तामहे[1] शश्वत् सुखेष्वन्येषु वानिशम् । अविलङ्घ्या च विश्वस्य व्यवस्था केनवा कृता । कालःस्वभावो नियतिर्यदृच्छा नात्र युज्यते । भूतानि योनिः पुरुषः योगो वैषां परोऽथवा । अचेतनत्वात्कालादेश्चेतनत्वेऽपि चात्मनः । सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते । ते ध्यानयोगानुगताः प्रापश्यञ्छक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् । तथा विच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमन्तं महादेवमपश्यन्दिव्यचक्षुषा । यः कारणान्यशेषाणि कालात्मसहितान्यपि । अप्रमेयोऽनया शक्त्या साकमेकोऽधितिष्ठति ॥' इत्यादिना स्फुटीकृतः । तस्मादुक्तविधया शिवस्य जगन्मूलकारणत्वनिर्णयार्था एवैते श्वेताश्वतरमन्त्राः ॥ १७ ॥

नन्वस्त्विदमेवं, तथापि शिव एव कारणमिति कुतोऽवधारणासिद्धिः । श्रुत्यन्तराम्नातेषु सृष्टिप्रकरणादिषु देवतान्तरनाम्नामपि कारणे ब्रह्मणि प्रयोगदर्शनादित्याशङ्क्याह—

प्रवृत्तेष्वन्यार्थं प्रभृतिलकसर्गश्रुतिगणे-
ष्वमुख्यार्थं युक्तं मतमपि पदं कारणपरम् ।
इह त्वन्नामेशो हर इति च तन्निर्णयवच-
स्यमुख्यार्थं नीतं[2] यदि बत हता निर्णयकथा ॥१८॥

---

१. इह वर्तामह इति पाठान्तरम् ॥ २. नीतम् इति पाठान्तरम् ॥

अयमर्थः—सृष्टिप्रकरणे स्रष्टृसद्भावस्रष्टव्यपदार्थविशेषतत्तत्क्रमादिप्रतिपादनेन कृतार्थेषु कारणे ब्रह्मणि प्रयुक्ता देवतान्तरवाचिनश्शब्दाः शक्या मुख्यार्थतात्पर्यविधुराः कल्पयितुम् । तथास्वीकृताश्च तद्विषयाः प्राणाकाशाक्षरादिशब्दाः । उदाहृतमन्त्रजाते तु श्रुत्यन्तरप्रतिपादितं स्रष्टृसद्भावादिकं सिद्धं कृत्वा सृष्टुर्ब्रह्मणो देवताविशेषरूपेण निर्णयार्थं प्रवृत्ते निर्णयवाक्ये कारणे प्रयुक्तं शिवासाधारणं नाम स्ववाच्योपस्थापनैकप्रयोजनमनन्यपरं न स्वार्थतात्पर्यविधुरं कल्पयितुं शक्यमिति । तथा च यथा पौर्णमास्यामाग्नेयाग्नीषोमीययोः क्रमेणानुष्ठानायापेक्षिते स्मृतिक्रमेऽनुष्ठेयार्थस्मृत्येकप्रयोजनमन्त्रपाठक्रम एव नियामक इति तद्विरोधात् यागस्वरूपमात्रविधानेन चरितार्थयोः ब्राह्मणयोः पाठक्रमो न नियामकः, तथा छान्दोग्यबृहदारण्यकादिषु सृष्टिवाक्येषु सामान्यतोऽवगतसद्भावस्य सृष्टुरपेक्षिते विशेषपर्यवसाने वि(श)षयोपन्यासपूर्वकं शिवस्य कारणत्वनिर्णयार्थं प्रवृत्तं किंशब्देनौचित्यात् कोट्यन्तरत्वेन विमृष्टानां देवतान्तराणां कारणत्वव्युदासपर्यवसायि उदाहृतं मन्त्रजातमेव नियामकं, न तु प्रमेयान्तरप्रतिपादनेन चरितार्थानि सृष्टिवाक्यानीति तत्रतत्र सृष्टिवाक्ये कारणे श्रूयमाणमपि देवतान्तरनामबृन्दम् । अश्वमेधे 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इत्यस्मिन् तत् प्रतिषिध्य प्रकृतिर्नियुज्यते । सा 'चतुस्त्रिंशद्वाच्यत्वादि'त्यधिकरणसमर्थितेन न्यायेन 'चतुस्त्रिंशद्वाजिनो देवबन्धोरि'ति वैशेषिकाध्रिगुवचनप्रतिषेधमात्रपरे वाक्ये 'षड्विंशतिरित्येव ब्रूयादि'ति चोदकप्राप्ताध्रिगुवचनानुवादभागः षड्विंशतिरिति सङ्ख्याविशेषग्रहणे तात्पर्यवैधुर्यात् षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वादित्यधिकरणोक्तन्यायप्राप्तस्य तूपरगोमृगयोरश्वस्य च वङ्क्रीणां समस्य वचनस्याबाधेन यथाप्राप्ताध्रिगुवचनमात्र इव मन्त्रोपनिषन्मन्त्रसमर्पित एव विशेषे पर्यवसानमर्हतीति भावः । एतेनेदं निरस्तं—यत्परे प्राहुः—जगत्कारणं वस्तु छान्दोग्यादिषु सद्ब्रह्मात्मादिशब्दैः उत्तरोत्तरं विशेषपर्यवसायिभिश्चेतनरूपतापर्यन्तबुद्धिगृहीतं महोपनिषदादिषु अनितरसाधारणेन नारायणशब्देनाभिधानात् 'छागो वा मन्त्रवर्णादि'ति न्यायेन नारायण एवेति पर्यवस्यति । क्वचित् प्रदेशे कारणे श्रूयमाणानां शिवशम्भ्वादिशब्दानां 'शिवास्ते सन्तु पन्थानः शम्भुः स्वयंभूर्द्रुहिण' इत्यादिदर्शनादसाधारण्याभावात् इति । यथास्ति नारायणशब्दस्य विष्णावसाधारण्यं, तथा शिवे हरशब्दस्यापि । अन्यत्र साधारण्यानुशासनाद्यदर्शनात् । तथा च परोक्तन्यायेन निर्णयासम्भवात् अस्मदुक्तरीत्या हरशब्दस्य तात्पर्यवत्त्वात्तत एव निर्णयो युक्तः । न च क्वचित्क्वचिन्नारायणशब्दस्य कारणेऽभ्यासदर्शनात् तस्यापि तात्पर्यवत्त्वमवगतमिति

वाच्यम् । तत्र बहुशोऽभ्यस्तस्यापि तस्य तद्विषयप्राणाकाशादिशब्दवत् वृत्त्यन्तरकल्पनासहिष्णुत्वेनान्यथासिद्धत्वात् , इह स्ववाच्यतदितरदेवताविशेषकोटिककारणसंशयानन्तरनिर्णयवाक्ये श्रुतस्य हरशब्दस्य अयं स्थाणुः पुरुषो वेति संशयानन्तरम् 'अयं पुरुष एवे'ति निर्णयवाक्ये श्रुतस्य पुरुषशब्दस्येव व्यवच्छेदनीयायां प्रतिकोटौ वृत्त्ययोगात् । यत्तु शिवादिशब्दानां शिवे असाधारण्यं नास्तीत्युक्तं, तत्र शिवशब्दे तावत्पृच्छामः—किं तस्य 'पन्थानस्सन्तु ते शिवा' इत्यादिप्रयोगविषयसाधारणशुभतारूढिव्यतिरेकेण शिवे असाधारणरूपेण शक्तिरेव नास्तीत्युच्यते, उत तत्सत्त्वेऽप्यक्षादिशब्दवदनेकशक्तिकत्वात् स्वतो न निर्णायकत्वमिति । नाद्यः । 'कल्याणं मङ्गलं शिव'मित्याद्यनुशासनव्यतिरेकेण 'शिवश्शूली महेश्वरः । ईशानश्शशिशेखरः पशुपतिश्शूली शिवश्शङ्करः । व्योमकेशो महादेवः प्रमथाधिपतिश्शिवः । शिवं मोक्षे च भद्रे च सलिले च शिवो हरे । शिवो बोले पद्मरागे हरे कीले शिवं जले । शिवं भद्रं शिवश्शम्भुः शिवा गौरी शिवा हये'त्याद्यन्यथासिद्धानुशासनबलात् 'विष्णुर्नारायणः कृष्ण' इत्याद्यनुशास[illegible]ष्णशब्दस्य वर्णविशेषे रूढिव्यतिरेकेण विष्णाविव 'शस्तं चाथ त्रिषु द्रव्ये [illegible]पपुण्यसुखादि च' इति स्मृतां सर्वद्रव्यसाधारणामर्थवल्लिङ्गतां विना नित्यपुल्लिङ्गतया असाधारणरूपेणापि तस्य तत्र शक्तेरवश्यमभ्युपगन्तव्यत्वात् । अन्यथा पथ्यादिवदेव तत्र पृथगनुशासनानपेक्षणेन तद्वैयर्थ्यापत्तेः । नापि द्वितीयः । केवलयोगेन कुमुदादिषु प्रयुज्यमानस्यापि पङ्कजादिशब्दस्य योगरूढ्युभयानुग्रहलाभेन पद्मपरत्वस्येव शिवशब्दस्य शुभत्वनीलकण्ठत्वादिविशिष्टरूपविषयशक्तिद्वयानुग्रहलाभेन परमेश्वरपरत्वस्यौत्सर्गिकतया प्रकरणोपपदाद्यनुपपीडितात्ततः सर्वत्र परमेश्वरस्य प्रतीतेः स्वत एव च तस्य निर्णायकत्वात् । न चानेकशक्तस्यैकस्य शब्दस्य सकृच्छ्रुतस्यानेकशक्यपरत्वं न क्वापि दृष्टं, युगपद्वृत्तिद्वयस्य विरुद्धत्वादयुक्तं चेति वाच्यम् । सभङ्गश्लेषस्थले आवृत्तिं विना युगपदनेकशक्यानुसन्धानासम्भवात् सैन्धवमानयेत्यादौ नानार्थस्थले क्रमानुसन्धेयभङ्गविशेषानपेक्षणेन सामग्रीपौष्कल्याद्युगपदनुसंहितशक्तिद्वयेन चक्षुषा युगपदुत्पन्नसंयोगद्वयेनार्थद्वयप्रकाशवदर्थद्वयस्मरणोपपत्तावपि स्वतन्त्रार्थद्वयस्यापि प्रत्येकमानयनान्वयापत्त्या वाक्यभेदप्रसङ्गाच्च । अन्यत्र तथात्वेऽपि अत्र सभङ्गत्वाभावेनावृत्त्यनपेक्षणान्निखिलभुवनक्षेमङ्करे भगवति नीलकण्ठ एव प्रवृत्तिनिमित्तद्वयस्यापि विश्रान्तेः स्वतन्त्रार्थद्वयपरत्वाप्रसङ्गेन वाक्यभेदापत्त्यभावाच्च युगपदुन्मिषिताविरुद्धशक्तिद्वयस्य योगरूढिस्थल इवानुग्राह्यतया संयोगविप्रयोगसाहचर्यादिभिरन्यतरावच्छेदायोगेना-

साधारणशिवरूपवाचिनश्शिवशब्दस्य निरुपाधिशिवरूपत्वपरत्वस्याप्यभ्युपगन्तव्यत्वात् 'समा भवन्ति मे सर्वे दानवाश्चामराश्च ये । शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥' इति कर्णपर्वणि शिववचनेन तद्वाचिनश्शिवशब्दस्य निरुपाधिशिवरूपतापरत्वस्याप्यवगमाच्च । तस्माच्छिवशब्दः शक्तिद्वयानुग्रहलाभेनौत्सर्गिकशिवतात्पर्यवत्त्वात् तदसाधारण इत्येव युक्तम् । एतेन योगेनान्यत्रापि प्रयुज्यमानानामीश्वरमहेश्वरेशानादिशब्दानामप्यसाधारण्यं व्याख्यातम् । आहुश्चाभियुक्ताः—'यस्मिन्नीश्वर इत्यनन्यविषयश्शब्दो यथार्थाक्षरः । महेश्वरस्त्र्यम्बक एव नापरः ।' इत्यादि । ईशानशब्दस्य त्वसाधारण्यं 'शब्दादेव प्रमित' इति सूत्रेण भगवता बादरायणेनैव स्फुटीकृतम् । यत्तु शम्भुशब्दस्य द्रुहिणसाधारण्यं शङ्कितं, तत्सत्यमेव । तथापि 'शम्भुराकाशमध्य'इत्यादौ ब्रह्मणः कार्यकोटौ श्रवणेन तत्परत्वायोगे शिवपरत्वमेव सिध्यतीति न तावता अव्यवस्थापत्तिः । अन्यथा विष्णुपुराणे 'ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान्यथा । नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः' ॥ इत्याद्यनेकप्रदेशेषु, कौर्मे 'अवाप्य संज्ञां गोविन्दात् पद्मयोनिः पितामहः ॥' इति प्रस्तुत्य 'नारायणाख्यो भगवान्यथापूर्वं प्रजापतिः ॥' इति, आश्वलायनस्मृतौ 'तस्मादण्डादभूत्स्रष्टा शिवात्मा चतुराननः । सर्वलोकस्य निर्माता ब्रह्मा विश्वसृजांपतिः । स चाप्सु शयनादेव शिवात्मा स्वेच्छया चिरम् । नारायणाख्यामभजच्छक्तिरूपः प्रजापतिः' ॥ इति च ब्रह्मणोऽपि नारायणसंज्ञाभिधानेन नारायणशब्देन निर्णय इति पराभिमानस्यापि भङ्गापत्तेः । तस्मात् 'निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे सद्ब्रह्माद्यास्समानप्रकरणपठिताश्शङ्कितान्यार्थशब्दाः ॥' इति परोक्तमसङ्गतम् ॥१८॥

साक्षान्मन्त्रवर्णेनैव सर्वेषां कारणवाक्यानां शिवे पर्यवसानस्य दर्शितत्वाच्च तद्विरोधिन्यायाभासमात्रमवलम्ब्य परोक्तमसङ्गतमित्याह—

**अमुष्मिन्नाम्नातः शिवरितनयावल्लभ यदा**
**तमस्तन्नेत्येष स्वयमुपदिशन् कारणगिराम् ।**
**अशेषाणां मन्त्रो भवति भगवन् पर्यवसितिं**
**नयत्युन्मत्तानामितरपरतोक्तिं विफलताम् ॥ १९ ॥**

अस्यामेवोपनिषदि—'यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥' इत्याम्नायते मन्त्रः । अयं च सर्वेषां कारणवाक्यानां शिवविषयत्वनिर्धारणार्थः । कथं, यदा तम इति 'तमो वा इदमेकमास नासदासीन्नोसदासीत्तदानीं तम आसीत्प्रजापतिर्वा इदमेक आ-

सीन्नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्प'दित्यादिश्रुत्यन्तरप्रतिपन्नतमोविशेषाङ्कितकालविशेषानुवादेन तदित्यादिना शिवस्य तत्कालवर्तित्वेन विधानात् पुरोडाशादिद्रव्यसम्बन्धितया आग्नेयादिवाक्यप्रतिपन्नानां यागानामेव चतुरवत्तं जुहोती'ति तत्तत्पुरोडाशादिद्रव्यावदानसम्बन्धिहोमविधिबलाद्धोमरूपतेव तत्कालवर्तित्वेन पुरोवादप्रतिपन्नस्य परादिशब्दोदितस्य ब्रह्मण एव शिवरूपता पर्यवस्यतीत्येवं तावत्पूर्वार्धं केषाञ्चित्कारणवाक्यानां विषयविशेषोपसंहारपर्यवसायि । तथा तदक्षरमिति मुण्डकादीनां 'तत्सवितुर्वरेण्य'मिति आदित्यमण्डलवर्तिनि परमपुरुषे कारणत्वाक्षेपकलिङ्गं सर्वान्तर्यामित्वमुपवर्णयन्त्या गायत्र्याः 'प्रज्ञा च तस्मात्प्रसृता पुराणीति, तदैक्षत बहु स्यां प्रजायेयेति, स ईक्षत लोकान्नु सृजा इति, सोऽकामयत बहु स्यां प्रजायेयेति तपसा चीयते ब्रह्मे'ति च स्रष्टुरादिसृष्टिपूर्वकालीनं सृष्टव्यवस्तुजातालोचनं प्रतिपादयतां छान्दोग्यादिश्रुतकारणवाक्यानाम् ईक्षणादिशब्दैरुपात्तस्य स्रष्टव्यालोचनस्य तदन्यतमशब्देन ग्रहणे तच्छब्दयुक्तश्रुतिमात्रविषयोपसंहारशङ्का स्यादिति सर्वसाधारणेन प्रज्ञाशब्देन तदुपादाय च विषयविशेषोपसंहारपर्यवसायित्वेऽप्ययं कृत्स्नो मन्त्रः सकलकारणवाक्यविषयविशेषनिर्धारणार्थः । एवं साक्षाद्वेदोपदर्शितविषयविशेषनिर्धारणविरुद्धं मूर्खजल्पितमनादेयमित्यर्थः ॥१९॥

यत्तु परैरुक्तं—नायं मन्त्रः स्वयं कारणस्य तमसः प्रापकः । यदेति कालविशेषप्राप्तानुवादात् । प्राप्तिश्च 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते । तमः परे देव एकीभवती'ति सुबालोपनिषद्वाक्येन । तस्यां चाव्यक्ताक्षरक्रमेण 'यस्य शरीर'मित्युपक्रम्य 'एष आत्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति पाठान्नारायणाधिष्ठितस्य तमसः प्रापकं श्रुत्यन्तरमिह पुरोवाद इति तदनुरोधादनुवादमन्त्रश्रुततमोऽधिष्ठातृपरशिवशब्दो नारायणपर एव । 'तमो वा इदमेकमास' इत्यादिश्रुत्यन्तरस्य पुरोवादत्वाश्रयणेऽपि तस्य सौबालवाक्यप्रतिपन्नविशेषपर्यवसायित्वेनाविशेषात् । एवं च 'तदक्षर'मित्यादिनापि नारायणस्यैव प्रकारविशेषोपदेश इति । तत्र यथा 'विश्वजित्सर्वपृष्ठो भवती'ति विधेयपरबहुविषयसर्वशब्दार्थानुरोधात् बृहद्रथन्तररूपप्राकृतपृष्ठत्यागेन षाडहिकपृष्ठानुवादपरत्वं कल्प्यते, तथा यदा तम इत्यस्यापि शिवविधितात्पर्यानुरोधात् आपाततोऽन्यविषयसौबालादिवाक्यत्यागेन श्रुत्यन्तरेषु विरुद्धानेकविशेषश्रवणात् क्वचिदप्यपर्यवसितमैत्रायणश्रुत्यादिप्रापितार्थानुवादपरतैवेति वक्तुं शक्यत्वेऽपि परमते बुद्धिलाभेन मूलहानिन्यायं सूचयितुं तन्मते मन्त्रस्यैव तावद्वैयर्थ्यापत्तिं दर्शयति—

साधारणशिवरूपवाचिनश्शिवशब्दस्य निरुपाधिशिवरूपत्वपरत्वस्याप्यभ्युपगन्तव्यत्वात् 'समा भवन्ति मे सर्वे दानवाश्चामराश्च ये । शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥' इति कर्णपर्वणि शिववचनेन तद्वाचिनश्शिवशब्दस्य निरुपाधिशिवरूपतापरत्वस्याप्यवगमाच्च । तस्माच्छिवशब्दः शक्तिद्वयानुग्रहलाभेनौत्सर्गिकशिवतात्पर्यवत्त्वात् तदसाधारण इत्येव युक्तम् । एतेन योगेनान्यत्रापि प्रयुज्यमानानामीश्वरमहेश्वरेशानादिशब्दानामप्यसाधारण्यं व्याख्यातम् । आहुश्चाभियुक्ताः—'यस्मिन्नीश्वर इत्यनन्यविषयश्शब्दो यथार्थाक्षरः । महेश्वरस्त्र्यम्बक एव नापरः ।' इत्यादि । ईशानशब्दस्य त्वसाधारण्यं 'शब्दादेव प्रमित' इति सूत्रेण भगवता बादरायणेनैव स्फुटीकृतम् । यत्तु शम्भुशब्दस्य द्रुहिणसाधारण्यं शङ्कितं, तत्सत्यमेव । तथापि 'शम्भुराकाशमध्य' इत्यादौ ब्रह्मणः कार्यकोटौ श्रवणेन तत्परत्वायोगे शिवपरत्वमेव सिध्यतीति न तावता अव्यवस्थापत्तिः । अन्यथा विष्णुपुराणे 'ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान्यथा । नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः' ॥ इत्याद्यनेकप्रदेशेषु, कौर्मे 'अवाप्य संज्ञां गोविन्दात् पद्मयोनिः पितामहः ॥' इति प्रस्तुत्य 'नारायणाख्यो भगवान्यथापूर्वं प्रजापतिः ॥' इति, आश्वलायनस्मृतौ ,तस्मादण्डादभूत्स्रष्टा शिवात्मा चतुराननः। सर्वलोकस्य निर्माता ब्रह्मा विश्वसृजांपतिः। स चाप्सु शयनादेव शिवात्मा स्वेच्छया चिरम् । नारायणाख्यामभजच्छक्तिरूपः प्रजापतिः' ॥ इति च ब्रह्मणोऽपि नारायणसंज्ञाभिधानेन नारायणशब्देन निर्णय इति पराभिमानस्यापि भङ्गापत्तेः । तस्मात् 'निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे सद्ब्रह्माद्यास्समानप्रकरणपठिताश्शङ्कितान्यार्थशब्दाः ॥' इति परोक्तमसङ्गतम् ॥१८॥

साक्षान्मन्त्रवर्णेनैव सर्वेषां कारणवाक्यानां शिवे पर्यवसानस्य दर्शितत्वाच्च तद्विरोधिन्यायाभासमात्रमवलम्ब्य परोक्तमसङ्गतमित्याह—

**अमुष्मिन्नाम्नातः शिखरितनयावल्लभ यदा**
**तमस्तन्नेत्येष स्वयमुपदिशन् कारणगिराम् ।**
**अशेषाणां मन्त्रो भवति भगवन् पर्यवसितिं**
**नयत्युन्मत्तानामितरपरतोक्तिं विफलताम् ॥ १९ ॥**

अस्यामेवोपनिषदि—'यदा तमस्तन्न दिवा न रात्रिः न सन्न चासञ्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥' इत्याम्नायते मन्त्रः। अयं च सर्वेषां कारणवाक्यानां शिवविषयत्वनिर्धारणार्थः । कथं, यदा तम इति 'तमो वा इदमेकमास नासदासीन्नोसदासीत्तदानीं तम आसीत्प्रजापतिर्वा इदमेक आ-

सीन्नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्प'दित्यादिश्रुत्यन्तरप्रतिपन्नतमोविशेषाङ्कितकालविशेषानुवादेन तदित्यादिना शिवस्य तत्कालवर्तित्वेन विधानात् पुरोडाशादिद्रव्यसम्बन्धितया आग्नेयादिवाक्यप्रतिपन्नानां यागानामेव चतुरवत्तं जुहोती'ति तत्तत्पुरोडाशादिद्रव्यावदानसम्बन्धिहोमविधिबलाद्धोमरूपतेव तत्कालवर्तित्वेन पुरोवादप्रतिपन्नस्य परादिशब्दोदितस्य ब्रह्मण एव शिवरूपता पर्यवस्यतीत्येवं तावत्पूर्वार्धं केषाञ्चित्कारणवाक्यानां विषयविशेषोपसंहारपर्यवसायि । तथा तदक्षरमिति मुण्डकादीनां 'तत्सवितुर्वरेण्य'मिति आदित्यमण्डलवर्तिनि परमपुरुषे कारणत्वाक्षेपकलिङ्गं सर्वान्तर्यामित्वमुपवर्णयन्त्या गायत्र्याः 'प्रज्ञा च तस्मात्प्रसृता पुराणीति, तदैक्षत बहु स्यां प्रजायेयेति, स ईक्षत लोकान्नु सृजा इति, सोऽकामयत बहु स्यां प्रजायेयेति तपसा चीयते ब्रह्मे'ति च स्रष्टुरादिसृष्टिपूर्वकालीनं स्रष्टव्यवस्तुजातालोचनं प्रतिपादयतां छान्दोग्यादिश्रुतकारणवाक्यानाम् ईक्षणादिशब्दैरुपात्तस्य स्रष्टव्यालोचनस्य तदन्यतमशब्देन ग्रहणे तच्छब्दयुक्तश्रुतिमात्रविषयोपसंहारशङ्का स्यादिति सर्वसाधारणेन प्रज्ञाशब्देन तदुपादाय च विषयविशेषोपसंहारपर्यवसायीत्येवमयं कृत्स्नो मन्त्रः सकलकारणवाक्यविषयविशेषनिर्धारणार्थः । एवं साक्षाद्वेदोपदर्शितविषयविशेषनिर्धारणविरुद्धं मूर्खजल्पितमनादेयमित्यर्थः ॥१९॥

यत्तु परैरुक्तं—नायं मन्त्रः स्वयं कारणस्य तमसः प्रापकः । यदेति कालविशेषप्रमानुवादात् । प्राप्तिश्च 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते । तमः परे देव एकीभवती'ति सुबालोपनिषद्वाक्येन । तस्यां चाव्यक्ताक्षरक्रमेण 'यस्य शरीर'मित्युपक्रम्य 'एष आत्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति पाठान्नारायणाधिष्ठितस्य तमसः प्रापकं श्रुत्यन्तरमिह पुरोवाद इति तदनुरोधादनुवादमन्त्रश्रुततमोऽधिष्ठातृपरशिवशब्दो नारायणपर एव । 'तमो वा इदमेकमास' इत्यादिश्रुत्यन्तरस्य पुरोवादत्वाश्रयणेऽपि तस्य सौबालवाक्यप्रतिपन्नविशेषपर्यवसायित्वेनाविशेषात् । एवं च 'तदक्षर'मित्यादिनापि नारायणस्यैव प्रकारविशेषोपदेश इति । तत्र यथा 'विश्वजित्सर्वपृष्ठो भवती'ति विधेयपरबहुविषयसर्वशब्दार्थानुरोधात् बृहद्रथन्तररूपप्राकृतपृष्ठत्यागेन षाडाहिकपृष्ठानुवादपरत्वं कल्प्यते, तथा यदा तम इत्यस्यापि शिवविधितात्पर्यानुरोधात् आपाततोऽन्यविषयसौबालादिवाक्यत्यागेन श्रुत्यन्तरेषु विरुद्धानेकविशेषश्रवणात् क्वचिदप्यपर्यवसितमैत्रायणश्रुत्यादिप्रापितार्थानुवादपरतैवेति वक्तुं शक्यत्वेऽपि परमते बुद्धिलाभेन मूलहानिन्यायं सूचयितुं तन्मते मन्त्रस्यैव तावद्वैयर्थ्यापत्तिं दर्शयति—

पुरोवादश्रुत्यन्तरविदितरूपे यदि परं
नियच्छेदात्मानं पठितमिह मन्त्रे शिवपदम् ।
यदेत्याद्यं कालं मनुरयमनूद्य स्मरारिपो
विधत्तां किन्नाम स्थितिमविदधानस्तव तदा ॥ २० ॥

अयमर्थः—सत्यं 'यदा तम' इत्यनुवादः, न तु सौबालवाक्यमेव पुरोवादः। अन्येषामप्यनूद्यमानार्थस्य प्रापकाणां श्रवणेनाविशेषात् । नापि 'तन्न दिवे'त्यादिरप्यनुवादः । तद्वृत्तयोगेन तत्काले कस्यचिद्विधेयताप्रतीतेः । विधेयश्च तत्र न दिननिशाविभागाभावः, सदसदात्मकप्रपञ्चाभावो वा। पुरोवादेभ्य एव तयोः प्राप्तेः। न हि किञ्चिदनूद्य किञ्चिद्विधातुं प्रवृत्तं वाक्यमनुवादायावश्यमपेक्षितात्पुरोवादादेव प्राप्तेऽर्थे पर्यवस्यत्साफल्यमश्नुवीत । अतस्तत्रापि न दिवेत्यादिरनुवादः । एवं च शिवशब्दोऽपि यदि कथञ्चिदौत्सर्गिकार्थपरतां हित्वा पुरोवादविशेषप्राप्ते नारायण एव पर्यवस्येत, तदा 'यदा तमस्तदि'ति किञ्चिद्विधातुमुद्यम्यार्धपथे स्थितं वाक्यं किं विधेयमासाद्य विश्राम्यतु । न हि तस्य नारायणवृत्तित्वे पुरोवादादप्राप्तं कञ्चिदर्थं पश्यामः । तस्मात् परमते वाक्यमेव तावद्वैयर्थ्यं प्राप्तमिति । ततश्च 'यथा 'एकादश पशोरवदानानि तानि द्विरवद्यती'ति विधिवैयर्थ्यपरिहाराय यद्यपि 'चतुरवत्तं यजमानः पञ्चावत्तैव वपा कार्या' इत्यत्र वपापदस्य विशिष्य वपाग्रहणे न तात्पर्यं, किं तु सामान्यतः पशुप्रकृतिकहविर्मात्रग्रहण इति निर्णीतं, तथात्राप्येतद्विधिवैयर्थ्यपरिहाराय पुरोवादे नारायणपदस्य विशिष्य विष्णूपाधौ न तात्पर्यं, किं तु सामान्येन परब्रह्ममात्रोपलक्षणमिति व्याख्येयम् । अन्यथा पुरोवादान्तरश्रुतप्रजापतिशब्दस्याप्येवं स्वार्थपरत्वे शिवशब्दस्य क्व पर्यवसानमित्यनिर्णयापाताच्च । तस्मात्तत्तत्पुरोवादश्रुततमोऽधिष्ठातृपरपरब्रह्मप्रजापतिनारायणादिसकलशब्दार्थनिर्धारणेदम्परैतद्विधिबलात्सौबालश्रुतेरपि शिव एव पर्यवसानं स्यादिति भावः । पर्यवसानप्रकारस्तु सदृष्टान्तमग्रे व्युत्पादयिष्यते ॥ २० ॥

किं च मन्त्रोपनिषदः कार्त्स्न्येन शिवपरत्वादपि तदन्तर्गतमन्त्रस्यान्यपरत्वोक्तिरयुक्तेति सूचयन्नेतदेव व्यवस्थापयति—

इयं मानोत्कृष्टा हरशिवमुखानन्यविषय-
त्वदाख्यारत्नालंकृतनिखिलमन्त्राङ्गमधुरा ।
समस्तैर्नैवास्तीत्युपनिषदुमावल्लभ दृढं
भवत्येवाधत्ते सकलमपि भावं गुणनिधौ ॥ २१ ॥

वेदान्तरूपत्वात्सर्वप्रमाणमूर्धन्या, हरशिवेशरुद्रेशानमहेश्वरशब्दैः लोक-

प्रसिद्धैः 'अथ कस्मादुच्यते सर्वव्यापी' 'विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततस्स्मृतः।' 'हंसो नाम सदाशिवः । अथाष्टभिर्नामभिः ।' इत्याद्यथर्वशिरोमहाभारतबोधायनसूत्राद्यवगमितशिवनामभावैः सर्वव्यापिविश्वरूपहंसमहदादिशब्दैश्चानन्यविषयैर्देवतान्तराविषयैरन्यदेवतावाचिशब्दान्तरव्यतिकररहितैर्वा शिवनामरत्नैरलंकृतैः 'क्षरं प्रधानममृताक्षरं हरः । भावाभावकरं शिवम् । भूयः सृष्ट्वा पतयस्तथेशः । एको रुद्रो न द्वितीयाय तस्थुः । ईशानो ज्योतिरव्ययः । तमीश्वराणां परमं महेश्वरम् । सर्वव्यापी च भगवान् तं विश्वरूपं भवभूतमीड्यम् । एको हंसो भुवनस्यास्य मध्ये । महान् प्रभुर्वै पुरुषः ।' इत्यादिभिस्सर्वमन्त्रावयवैर्मधुरा 'न तत्समश्चाभ्यधिकश्च दृश्यते ।' इति कण्ठोक्त्यैव शिवसदृशपुरुषान्तरप्रतिषेधं कुर्वतीयं श्वेताश्वतराणां मन्त्रोपनिषत् 'छन्दांसि यज्ञाः क्रतवो भूतानि भूतभव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः । मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । तमाहुरग्र्यं पुरुषं महान्तं स एव काले भुवनस्य गोप्ता । विश्वाधिपस्सर्वभूतेषु गूढः स्वभावमेके कवयो वदन्ति । कालं तथान्ये परिमुह्यमानाः दैवस्यैष महिमा तु लोके। येनेदं भ्राम्यते ब्रह्मचक्रम् । तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम् । न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चित् जनिता न चाधिपः । स विश्वकृद्विश्वविदात्मयोनिः ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः । यो ब्रह्माणं विदधाति पूर्वं यो व वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।' इत्यादिमन्त्रेष्वत्यन्ताभ्यासस्फुटीकृतं सकलमूलप्रकृत्यधिष्ठातृत्वसर्वकारणत्वसर्वेश्वरत्वसर्वोत्तमत्वानन्याधिपतित्वमुमुक्षूपास्यत्वादिपरभावविषयं सर्वमपि भावमनेकमन्त्राभ्यस्यमानशिवरुद्रादिश्रुतिसमर्पिते निखिलकल्याणगुणरत्नाकरे भवति साम्बशिव एव निधाय कार्त्स्न्येन तत्रैव पर्यवसितेत्यर्थः । अत्र विशेषणसाम्यात् अप्रस्तुतनायिकावृत्तान्तस्य समासोक्त्यैव गम्यतया तद्वाचिपदाप्रयोगः । स्पष्टीकृतं चास्याः कार्त्स्न्येन शिवपरत्वं कूर्मपुराणे सुशीलोपाख्याने—'अथास्मिन्नन्तरेऽपश्यत्समायान्तं महामुनिम् । श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥' इत्यादिना सुशीलस्य राज्ञः श्वेताश्वतरस्य महर्षेर्दर्शनं तद्वन्दनादिकं शिष्यभावेन परिग्रहप्रार्थ-

१. सर्वं परापरमिति पाठान्तरम् ॥

नं चोपन्यस्य 'सोऽनुगृह्याथ राजानमि'त्यादिना महर्षेस्तत्प्रार्थनस्याङ्गीकारादिकमुक्त्वा 'ददौ तदैश्वरं ज्ञानं स्वशाखोक्तं हितप्रदम् । अशेषवेदसिद्धं तत् पशुपाशविमोचनम्' इति पाशुपतज्ञानस्य श्वेताश्वतरशाखोक्तत्वकीर्तनेन, 'उवाच शिष्यान् संप्रेक्ष्य एतदाश्रमवासिनः । ब्राह्मणान् क्षत्रियान्वैश्यान् ब्रह्मचर्यपरायणान् । मया प्रदर्शितां शाखामधीत्यैवेह योगिनः । समासते महादेवं ध्यायन्तो निष्कलं शिवम् । इह देवो महादेवो रममाणस्सहोमया । अध्यास्ते भगवानीशो भक्तानामनुकम्पया ।' इति तच्छाखोक्तमार्गेण तेषां शिवध्यानोपवर्णनादिना च । इयं ह्युपनिषत् श्वेताश्वतरेण महर्षिणा दर्शिता शाखा । 'तपःप्रसादाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥' इत्यन्ते श्रवणात् । वायुसंहितायां चतुर्थे पशुपतिनिर्णयाध्याये शिवपरत्वमस्याः प्रपञ्चेनोपदर्शितम् ॥२१॥

यत्त्वस्याः शिवपरत्वमसहमानैः परैरुक्तम् अस्याः तृतीयेऽध्याये—'वेदाहमेतं पुरुषं महान्तम् ॥' इति पुरुषसूक्तपठितमन्त्राम्नानेन तत्प्रतिपाद्यस्य नारायणस्य प्रत्यभिज्ञानात्तत्परताऽस्या अवसीयते । न च 'तेनेदं पूर्णं पुरुषेण सर्वम् ॥' इत्यन्तेन तमनूद्य 'ततो यदुत्तरतरमि'त्यादिमन्त्रेण ततः परस्यैव कस्यचिद्वेदनममृतत्वसाधनमुक्त्वा तदनन्तरमन्त्रे 'तस्मात्सर्वगतश्शिव' इति तत्र शिवपदप्रयोगात् ततोऽपि परत्वेन शिवप्रतिपादन एवास्यास्तात्पर्यमिति वाच्यम् । प्रथममेव वेदाहमेतमिति मन्त्रेण नारायणवेदनस्यैव मोक्षहेतुत्वस्य 'यस्मात्परं ने'त्यनन्तरमन्त्रेण तस्मात्परामावस्य च प्रतिपादनात् तदनन्तरश्रुतमन्त्रसन्दर्भस्य तद्विरुद्धेऽर्थे तात्पर्यकल्पनायोगेन तत्रापि 'सहस्रशीर्षा पुरुषः पुरुष एवेदं सर्वम्' इति पौरुषसूक्तमन्त्रद्वयप्रत्यभिज्ञानात् 'सत्त्वस्यैष प्रवर्तक' इति सत्त्वगुणोपाधिलिङ्गोपन्यासाच्च तस्यापि नारायणपरत्वनिश्चयेन च तदनुरोधेन ततः शब्दद्वयस्य पूर्वमन्त्रार्थस्य हेतुकरणे पूर्वमन्त्रान्तनिर्दिष्टस्य विश्वस्यावधिकरणे वा तात्पर्यकल्पनमिति' तन्निराकरोति—

**कचित् पुंसूक्तस्य स्पृशति शिवमन्त्रानिति कथं**
**जहात्वेषानेकश्रुतिनियमितां त्वद्विषयताम् ।**
**अपि श्रीरुद्राणामिह बहुषु मन्त्रेषु भगवन्**
**अधीतेष्वज्ञानं किमिव च ततो निर्णयवचः ॥ २२ ॥**

श्रुतयो हि प्रत्यभिज्ञानात् स्थलद्वयपरामर्शापेक्षत्वेन विलम्बितात् बलवत्तराः । अथचोपनिषदुपक्रममारभ्यानुवर्तमानात्यन्ताभ्यस्तानेकाभिधानश्रुतिप्रापितं शिवविषयत्वमपोह्य न देवतान्तरविषयत्वमापादयितुं शक्नोति पुरुषसूक्तम-

न्त्रप्रत्यभिज्ञा । छान्दोग्यश्रुतायामुपनिषदुपक्रमपर्यालोचनलब्धोद्गीथावयवविषयायामुद्गीथविद्यायां बृहदारण्यकश्रुतकृत्स्नोद्गीथकर्तृविषयोद्गीथविद्याप्रकरणपठितदेवासुरसङ्ग्रामासुरात्ययाभिप्रायाद्यर्थवादप्रत्यभिज्ञेव तदेकविषयत्वं, 'यः पशुकामस्स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि'ति विशिष्टकर्मविधिवाक्ये अभ्युदयेष्टिश्रुतदेवतासम्बन्धपरवाक्यच्छायाप्रत्यभिज्ञेव दधिपयसोः प्रदेयधर्मत्वमिति भावः। न च तत्रतत्र प्रतिपाद्यभेदेऽप्यर्थवादादिमात्रसारूप्यं न विरुद्धम्। इह तु पुरुषसूक्तमन्त्रोपनिषदोः प्रतिपाद्यभेदे द्वयोः सार्वात्म्याद्ययोगात् 'पुरुष एवेदं सर्वमि'ति 'नान्यः पन्था' इति चोभयत्र पाठो विरुद्ध इति वाच्यम्। ऐक्यवादे वास्तवैक्यसत्त्वेन भूमात्मनोरिव परमते पुरुषसूक्तशाण्डिल्यविद्ययोर्विद्याभेदेऽपि तद्विषययोरिव सार्वात्म्योपदेशस्य सर्वमूर्त्यनुस्यूतनिरुपाधिकचैतन्याभिप्रायेण तद्वेदनस्यैव मुक्त्युपायत्वनित्यवधारणस्य च तयोः प्रतिपाद्यमूर्तिभेदेऽप्युपपन्नतमत्वात्. पररीत्याश्रयणेऽपि शिवस्यापि 'सर्वो वै रुद्रः अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः' 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥' इत्यादिश्रुतिषु सार्वात्म्याद्युपदेशदर्शनेनान्यतरसार्वात्म्योपदेशस्य 'आपो वा इदं सर्वम्' इत्यादिवत् गौणत्वस्य द्वयोरपि क्रमेण मुक्त्यर्थं भजनीयत्वेन प्रासादाधिरोहणे सोपानपर्वणोरिव तयोः पथ्यन्तरव्यवच्छेदेन मुक्तावुपायत्वोपदेशस्य च समर्थयितव्यतया श्रुत्यन्तरेष्विवात्रापि शिवस्य सार्वात्म्याद्युपदेशस्य श्रुतिद्वयेऽपि प्रतिपाद्ययोः जगत्कारणत्वावगमस्य बलानुरोधिन्या व्यवस्थया वक्ष्यमाणन्यायेन मूलकारणत्वावान्तरकारणत्वविषयत्वस्य चोपपन्नत्वेनान्यथासिद्धप्रत्यभिज्ञामात्रेण प्रबलानेकश्रुतिबाधनायोगात्। अन्यथा मन्त्रोपनिषन्मन्त्रप्रत्यभिज्ञया पुरुषसूक्तस्यैव पराभिमतनारायणवाचिपुरुषश्रुत्यादिबाधेन शिवपरत्वमिति वैपरीत्यापत्तेर्दुष्परिहरत्वात्। तस्मादकिञ्चित्करीह पुरुषसूक्तप्रत्यभिज्ञा। परोपन्यस्तं लिङ्गं तु सत्त्वशब्दस्यानेकार्थत्वादनेकश्रुतिविरुद्धैकलिङ्गानुन्मेषाच्च न शङ्कार्हमित्युपेक्षितम्। किं च रुद्राध्यायमन्त्राणामपि इह पठितत्वेन तत्प्रत्यभिज्ञाया अपीह सत्त्वात् तामनादृत्य पुरुषसूक्तप्रत्यभिज्ञैकपक्षपातेन परेषां ततो निर्णयकथा वृथेत्याह— **आपि श्रीरुद्राणामिति**। पठ्यते ह्यस्यां तृतीयाध्याय एव— 'या ते रुद्र शिवा तनूः, यामिषुं गिरिशन्त हस्ते' इति मन्त्रद्वयम्। न च 'मा हिंसीः पुरुषं जगत्' इत्येतदनन्तरं 'ततः परं ब्रह्म परं बृहन्तम्' इत्युपक्रम्य वेदाहमित्यादिमन्त्रपाठात् रुद्रात् परत्वेन विष्णोः

प्रतिपादनेऽस्यास्तात्पर्यमस्त्विति वाच्यम् । प्रथममेव 'य एको जालवानीशत ईशनीभिः' इत्यादिमन्त्रैः सर्वेश्वरत्वमुक्तिप्रदत्वसकलसृष्टिसंहारस्थितिस्वातन्त्र्यविश्वाधिकत्वादिधर्मवत्तया शिवस्य प्रतिपादनेन तद्विरुद्धेऽर्थे तदनन्तरमन्त्रसन्दर्भस्य तात्पर्यकल्पनायोगात् । तत्रापि 'मानस्तोक'इत्यादिरुद्रमन्त्रप्रत्यभिज्ञानेन 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यमि'ति रुद्रपदसमभिव्याहारानुगृहीतदक्षिणमुखसद्भावसूचितश्रीसदाशिवदक्षिणामूर्त्यन्यतरविग्रहलिङ्गबलेन च तस्यापि शिवपरत्वावसायाच्च तदनुरोधेन अत्रापि ततःशब्दो हेत्वादिपर इति परोक्तरीत्यैव सुवचतया परेषां स्ववाग्वज्रेणैव प्रहतानामिह शङ्कानवकाशात् । तस्मात् परस्परप्रतिपक्षिते प्रत्यभिज्ञाद्वये शिवरुद्राद्याभिरभिधानश्रुतिभिरेव देवताविशेषनिर्णय इति भावः ॥२२॥

प्रत्यभिज्ञयोरपि रुद्राध्यायमन्त्राणां पुरुषसूक्तमन्त्रेभ्यः प्राक्पश्चाच्च संदंशन्यायादुभयत आम्नानेनाग्न्यादिसाधारण्येऽपि शङ्क्यमानैतच्छ्रुतिविषयभावदेवतान्तरव्यावृत्तेन रुद्र इति लोकप्रसिद्धेन गिरित्रगिरिशन्तेतिवेदप्रसिद्धेन च शिवनाम्ना घटितत्वेन शिवासाधारणानेकनामरूपायुधादिप्रकाशनेन शिवविषयत्वस्य स्पष्टत्वेन च तत्प्रत्यभिज्ञाया बलवत्त्वात् विषयविशेषसमर्पणक्षमत्वाच्च तत एवास्याः प्रतिपाद्यविशेषनिर्णयो युक्त इत्याशयेनाह—

मनूनां रौद्राणां प्रथममनुचाम्नानमिह यत्[1]
यदप्येते नाथ स्फुटतरभवन्नामघटिताः[2] ।
इदं रुद्राध्यायो यदपि च भवत्येव नियतः
ततस्तेषामेव प्रमितिकरमाम्नानमिह नः[3] ॥ २३ ॥

पुंसूक्तमन्त्रास्तु रुद्रमन्त्रसन्दर्भमध्यपतिताः, न पृथगाम्नाताः[4], न च देवताविशेषासाधारणपदघटिताः । नापि पुंसूक्तस्य शिवादन्यत्र पर्यवसानमित्यत्र किञ्चित्प्रमाणमस्ति । पुरुषशब्दासाधारण्यस्य प्रागेव निराकरणात् । कथञ्चिदेतत्सूक्तप्रतिपाद्यस्यासाधारण्येन पुरुषाभिधानकल्पनायामपि तावता शिवादन्यत्र पर्यवसानाभावात् अन्यस्य च श्रुत्यादीनामन्यतमस्य प्रमाणस्यानुपलम्भादिति तत्प्रत्यभिज्ञाया दौर्बल्यं, विरुद्धविषयसमर्पणाक्षमत्वं चार्थात्सूचितम् ॥२३॥

एवं पुरुषसूक्तस्य देवतान्तरपरत्वेऽपि श्रुतीनां रुद्रोपनिषत्प्रत्यभिज्ञायाश्च प्रबलत्वाद्वस्तुतो देवतान्तरपरत्वे प्रमाणानुपलम्भाच्च तत्प्रत्यभिज्ञानमकिञ्चित्करमिति मन्त्रोपनिषदः कार्त्स्न्येन शिवपरत्वमास्थितं निर्व्यूढम् । अधुना तत्प्रसङ्गात्तस्यापि शिवपरत्वमेवाभ्युपगन्तुं युक्तमिति उपपादयति—

---

१, आद्योऽपीति, अत्राद्योऽपीति च पाठान्तरम् । २. स्फुटमिति पाठान्तरम् ३. प्रमितिकरणमानमिह नः । इति पा० ४. प्रथममाम्नाताः । इति पाठान्तरम् ॥

उरीकर्तुं युक्ता हर पुरुषसूक्तस्य च बुधैः
त्वयीशानश्रुत्या समधिगमिते पर्यवसितिः ।
भवन्त्वप्यन्येज्याविधिषु विनियोगा विधिबलात्
अदोनिर्वाहार्थान्यपि विवरणानि स्मृतिकृताम् ॥२४॥

उतामृतत्वस्येशान इतीशानपदश्रुतिः । रूढ्या शिवमुपस्थाप्य सूक्तं न-याति तद्वशम् । नन्वमृतत्वस्येतीशितव्योपादानात्तदैश्वर्यरूपयौगिकार्थविवित्सया प्रयुक्तमीशानपदं 'सर्वस्यै वाच ईशाने'त्यत्रेव केवलयौगिकत्वान्न रूढ्या शिवस्य प्रतिपादकमिति चेत्, न । तदनुपादान इव तदुपादानेऽप्यवयवशक्त्या यौगिकार्थं प्रतिपादयत एव तस्य समुदायशक्त्या शिवस्यापि प्रतिपादकत्वस्यौत्सर्गिकस्य दुर्वारत्वात् इह केवलयौगिकत्वस्यैवासिद्धेः । न ह्यवयवार्थप्रतिसम्बन्ध्यनुपादान एव समुदायशक्त्युन्मेष इति कश्चिद्व्युत्पत्तिसिद्धो नियमः । 'शब्दादेव प्रमित' इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुषः' इति मन्त्रप्रतिपाद्यस्य पुरुष'स्येशानो भूतभव्यस्ये'तीशितव्योपादानेऽपीशानश्रुत्या परब्रह्मत्वनिर्णयात् । अन्यथा तत्रापीशानशब्दादैश्वर्यरूपपरब्रह्मलिङ्गमात्रप्रतीत्यापत्त्या तदभिधानश्रुतिरूपशब्दान्निर्णयाभावापातात् । न च तत्र लिङ्गादेव निर्णयोऽस्त्विति वाच्यम् । प्रथमश्रुताल्पपरिमाणरूपजीवलिङ्गविरोधिना चरमश्रुतेन लिङ्गमात्रेण निर्णयायोगात् । तस्य जीवलिङ्गत्वाभावे पूर्वपक्षबीजाभावेनाधिकरणानारम्भापत्तेः, सौत्रशब्दपदस्यासामञ्जस्यापत्तेश्च । यथाश्रुतार्थसमर्थनसम्भवेन तस्य क्लिष्टार्थान्तरकल्पनासहिष्णुत्वात् परैरपि तत्र तस्य स्वाभिमते ब्रह्मणि शक्त्याभिमानेन नेश्वरसम्बन्धिलिङ्गान्निर्णयः , किंत्वीश्वरवाचिशब्दादेवेत्येवकाराभिप्राय इत्युक्तत्वाच्च । तस्मादङ्गुष्ठमन्त्रवत्पुरुषसूक्तस्यापीशानश्रुतिसमर्पिते परब्रह्मणि श्रीसदाशिवे पर्यवसानमिति युक्तम् । नन्वस्य सामविधिब्राह्मणे 'इदं विष्णुः वृक्षस्य वृष्णं' इत्यादिना वैष्णव्यां संहितायामुपदेशात् आथर्वणेऽष्टादशमहाशान्तिप्रकरणे तत्तच्छान्तिषु तत्तद्दैवत्यमन्त्रविनियोगावसरे वैष्णव्यां पुरुषसूक्तमिति विधानात् शौनकबोधायनादिस्मृतिषु विष्णुपूजाध्यानहोमादिषु विनियोगाच्च विष्णुपरत्वं प्रतीयत इत्याशङ्क्याह—भवन्त्विति । अयमाशयः—अस्ति तावच्छिवाराधनेऽपि विनियोगः तदभिधानश्रुत्याद्यनुकूलः, बोधायनसूत्रे शिवसङ्कल्पादिभिस्सह श्रीरुद्राङ्गन्यासमन्त्रेषूपदेशात् छन्दोगानां केषाञ्चिद्वाजसनेयिनां च महारुद्रजपमध्ये विनिवेशात् 'नमकं चमकञ्चैव पुंसस्सूक्तं च नित्यशः । जपन्नेति महादेवं गृहं गृहपतिर्यथा ॥ इति पुराणेष्वपि श्रवणात् वास्तुशान्तौ 'आवाह्य कुम्भे देवेशं रुद्रं भुवननायकम् ।' इत्युपक्रम्य 'नमकं चमकं चैव पौरुषं सूक्तमेव च ।' इत्यादिना

१. भवत्वप्यन्येज्याविधिषु विनियोग इति पाठान्तरम् ॥ २. पुरुषसूक्तं च इति पा०

जपे विनियोजनात् लैङ्गादित्यपुराणादिषु 'सकूर्चेन सपुष्पेण स्नापयेन्मन्त्रपूर्वकम्। मन्त्रांश्च ते प्रवक्ष्यामि शृणु सर्वार्थसिद्धये ॥' इत्युपक्रम्य 'ज्येष्ठसाम्नां त्रयेणैव तथा देवव्रतैरपि । रथन्तरेण पुण्येन सूक्तेन पुरुषेण च ॥' इति शिवाभिषेकमन्त्रेषु परिगणनाच्च । एवं च यथा 'उद्बुध्यस्वाग्ने' 'अग्निर्मूर्धा दिवः ककुत्' इत्यादिमन्त्राणां ग्रहयज्ञे तत्तद्ग्रहाराधने तत्तद्दैवत्यमन्त्रविधानावसरे बुधभौमादिपूजासु विनियुक्तानामपि बहुशस्तस्याराधनजपहोमादिषु विनियुज्यमानानामपि विरुद्धविनियोगमात्रेण श्रुतितदनुकूलविनियोगान्तरप्राप्तमाग्नेयत्वादिकं न हीयते, तथास्यापि 'अथ नारायणाभ्यामुपस्थानम्' 'यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्'। इत्यापस्तम्बसूत्रशातातपस्मृत्यादिसिद्धविनियोगान्तरेणेव विष्णुसमाराधने विनियोगेनापि श्रुतिप्राप्तं तदनुरोधिविनियोगानुमोदितं च शिवपर्यवसायित्वं न हीयत इति । नन्वस्त्वेवं विनियोगमात्रस्यान्यथासिद्धिः, तथापि पुराणेषु केषुचित्पाञ्चरात्रसंहिताविशेषेषु च नारायणस्यैतत्सूक्तप्रतिपाद्यसहस्रशीर्षत्वादिविशिष्टब्राह्मणाद्युत्पत्तिस्थानतत्तदवयवयुक्तरूपोपदेशैरेतत्सूक्तस्थतत्तन्मन्त्रार्थकथनमुखेन नारायणपरतया विवरणदर्शनात्तत्परत्वमभ्युपगन्तव्यम् । उपबृंहणानुरोधित्वाद्वैदिकार्थव्यवस्थाया इत्याशङ्क्य मन्त्रविवरणरूपोपबृंहणानां श्रुतविनियोगान्तरनिर्वाहार्थत्वेनान्यथासिद्धिसम्भवान्न तैः श्रुतितदनुकूलविनियोगावगमितं 'द्यौर्मूर्धा तु विभोस्तस्य खं नाभिः परमेष्ठिनः[1] । सोमसूर्याग्नयो नेत्रं दिशश्श्रोत्रे महात्मनः । वक्त्राद्वै ब्राह्मणास्सर्वे ब्रह्मा च भगवान्प्रभुः। इन्द्राविष्णू भुजाभ्यां तु क्षात्रियाश्च महात्मनः । वैश्याश्चोरुप्रदेशात्तु शूद्राः पादात् पिनाकिनः ॥' इत्यादिलैङ्गादिदृष्टोपबृंहणानुमोदितं च शिवपरत्वमस्य हापयितुं शक्यमित्याशयेनाह—अदोनिर्वाहार्थानीति । इदमत्र विवक्षितम्—अस्त्यन्यदेवत्यानामपि मन्त्राणां विधिबलात् देवतान्तरयजनेऽपि विनियोगः । स च मन्त्राधिकरणन्यायेन मन्त्रविनियोगस्य वाक्यार्थप्रतिपादनद्वारत्वात् मन्त्रस्थितदेवतापरेण पदेन मुख्यवृत्त्यभावे ऐन्द्राधिकरणन्यायेन वृत्त्यन्तरेणापि यजनीयदेवतायाः प्रतिपादनेन तत्समभिव्याहृतविशेषणपदानाञ्च 'दर्भैस्तृणीत हरितैरि' त्यत्र दर्भादिषु हरितत्ववत् तत्र सम्भवदर्थानां तद्विशेषणगुणादिप्रकाशनद्वारा 'सोमः पवते जनिता मतीनामि'ति मन्त्रे सोमलतायामिन्द्रादिजनयितृत्ववत् तत्रासम्भवदर्थानामसमवेतस्यापि समवेतविशेषणतयाभिधानं मन्त्रश्रुतविशेषणविशिष्टरूपप्रकाशनमभ्युदयकारीति नियमादृष्टार्थमिति 'अवचनं तेषामितरार्थं प्रयुज्यत' इति नावमिकाधिकरणे व्यवस्थापनात् अभ्युदयार्थं, 'अगन्मस्सुवः सुवरगन्म' इत्यत्र फलाभिधानवदादरातिशयजननार्थं वा तदसमवेतस्यापि गुणजातस्याभिधानद्वारा तत्र पर्यवसानेन च निर्वाह्य

१. परमेशितुः ति पाठान्तरम् ॥

इति विदितमेतन्मीमांसापरिचयशालिनाम् । तदिह पुरुषसूक्तस्य श्रुत्यादिनियमित-शिवैकान्त्यस्यापि श्रुतिस्मृतिदृष्टविनियोगान्तरनिर्वाहाय धनदादिप्रतिपादनप्रकारव-न्नारायणप्रतिपादनप्रकारस्यापि कस्यचित्पुराणाद्यभावे पुरुषबुद्ध्यापि कल्पनीय-त्वात् स एव तत्समाराधनतदङ्गतत्फलादिप्रपञ्चनप्रधानेषु पुराणागमेषु नियमित-इत्यन्यथासिद्धान्युपबृंहणानि । दृश्यन्ते हि असमवेतार्थविशेषणानामपि मन्त्राणां तथैव पुराणागमेषूपबृंहणानि—'सोमं ससर्ज यज्ञार्थं सोमाद्द्यौस्समजायत । धरा च वह्निः सूर्यश्च वज्रपाणिश्शचीपतिः । विष्णुर्नारायणः श्रीमान् सर्वं सोममयं जगत् ॥' इत्यादीनि । तस्मान्न तानि श्रुत्यादिप्रापितं शिवपरत्वं ह्रापयितुमीशत इति । न चैवमेकेन मन्त्रेणानेकार्थप्रतिपादने कश्चिद्विरोधः । एकस्यैव मन्त्रस्यानेकविनियोज-कप्रमाणद्वयोपनिपातेनानेकविनियोगवत्तन्निर्वाहान्यथानुपपत्तिकल्प्यस्यानेकार्थपरत्व-स्यापि प्रमाणबलायातस्य[1] सर्वसम्मतत्वात् । लोकेऽप्येकस्यैव पदस्य प्रयोगभेदेना-नेकार्थपरत्वस्योपलम्भेनात्रापि प्रयोगभेदेनानेकार्थप्रतिपादनस्य सम्भवाद्वस्तुविरोधा-भावाच्च । नन्वेवं प्रयोगभेदेनाप्यनेकदेवताप्रतिपादनपरमिदं सूक्तमनेकत्रासम्भवत् 'नान्यः पन्था अयनाय विद्यते' इत्यादिकं प्रतिपादयत् क्व वस्तुवृत्त्यैतन्महिमजातं प्रतिपादयति, क्व वा असमवेतमपि केवलमभ्युदयार्थं प्रकाशयतीति कथमवसेयमिति चेत्, इत्थम्—अनेकत्र विनियुक्तानां मन्त्राणां यत्र देवतायां तदभिधानश्रुत्यादिसद्भा-वेन स्वारस्यं, तत्र श्रुतविशेषणजातस्य वस्तुतः प्रतिपादनमित्युत्सर्गः । अभिधानश्रु-त्याद्यनुग्रहातिलङ्घने कारणाभावात् तत्तद्देवतोत्कर्षवादिभिस्सर्वैरपि तान्त्रिकैरन्यत्रा-पि तत्रतत्र विनियुक्तानां तत्तद्देवतालिङ्गानां मन्त्राणां तत्तद्देवतोत्कर्षे प्रमाणतयोप-न्यासाच्च । यत्र तु शब्दस्वारस्यविषये प्रतिपाद्यविशेषणानां मानान्तरेण बाधनि-श्चयः, तत्रोत्सर्गस्य त्यागः, यथामानं कथञ्चिद्वृत्त्यन्तरोपस्थिते चान्यत्र तेषां वस्तुतः प्रतिपाद्यत्वेनान्वयः । अन्यत्राप्यन्वयायोग्यानां तु स्तुत्याद्यर्थवाद इति वस्तुस्थितिः । ततश्च भेदवादे यद्यत्र उत्सर्गोऽनुरुध्यते, यदि वा तद्बाधशङ्कया श्रुत्यन्तरं निरी-क्ष्यते, उभयथापि परमशिव एवैतन्महिमजातं वस्तुवृत्त्या प्रतिपादयतीत्यवसेयम् । तस्यैवेहाभिधानश्रुतेः पाठात् तस्यैव मन्त्रोपनिषदथर्वशिरःकैवल्यश्रुत्यादिषु 'नान्यः पन्था विद्यतेऽयनाय', 'यदा चर्मवदाकाशं' 'तेषां शान्तिश्शाश्वती नेतरेषां, नान्यः पन्था विमुक्तये' इत्यादिप्रदेशेषु मुक्त्युपायत्वावधारणाच्च । एतेन विनियो-गोपबृंहणाभ्यामस्य सूक्तस्य विष्णुपरत्वव्यवस्थापनं परेषां निरस्तम् । न च पुरुषश-ब्दस्यानेकसाधारण्येऽपि आरुणकेतुके 'पूर्वमेवाहमिहासमि'ति कूर्माकृतिलिङ्गोपस्था-पितस्य नारायणवचनं प्रदर्श्य 'तत्पुरुषस्य पुरुषत्वम्' इति तदर्थं तत्र पुरुषशब्दस्य

1- प्रमाणबलायत्तस्य इति पाठान्तरम् ॥

प्रवृत्तिनिमित्तमभिधाय 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् । भूत्वोदतिष्ठदि'-त्यनन्तर पाठात् सहस्रशीर्षेत्यादिमन्त्रस्थपुरुषशब्दस्य तत्प्रवृत्तिनिमित्तकत्वेन नारायणपरत्वनिर्णयात् तस्य चात्र सूक्तादौ श्रवणात् 'महादेवं महापुरुषं वार्चयदि'ति कल्पसूत्रप्रयोगावगमिततदसाधारण्यस्य महापुरुषशब्दस्य 'वेदाहमेतमि'ति मन्त्रे पाठात् 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वलिङ्गोपन्यासेन 'यमन्तस्समुद्रे कवयो वयन्ति विद्यतः पुरुषादध्री'ति समुद्रशायित्वविद्युद्वर्णपुरुषत्वलिङ्गितपुराणादिप्रदेशविशेषप्रतिपादितकनकवर्णनारायणमूर्तिप्रतिपादनपरेण 'अम्भस्यपार' इति सूक्तेन स्मृतिषु तत्समाराधने हविर्निवेदने विनियुक्तैः 'हिरण्यगर्भः समवर्तताग्र' इत्यादिमन्त्रैश्च सह 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति तदनुवाकश्रुतवाक्योपपादितैकवाक्यत्वेन च नारायणपरतया सिद्धेन समनन्तरानुवाकेन स्वप्रतिपाद्यमहापुरुषमहिमवर्णनप्रवृत्तेनैकवाक्यत्वात् नारायणानुवाकेन नारायणे प्रतिपन्नस्य सहस्रशीर्षत्वादिधर्मस्य सुबालोपनिषदि 'चक्षुश्च द्रष्टव्यं च नारायणः' इत्यादिना नारायणात्मकत्वं सर्वस्योक्त्वा तदुपसंहारे पठितस्य 'पुरुष एवेदं सर्वमि'ति मन्त्रस्य च प्रत्यभिज्ञानात् 'पुरुषेण नारायणेन यजमान उपतिष्ठत' इत्यापस्तम्बादिभिस्तन्नाम्ना सूक्तस्य व्यपदेशाच्च नारायणपरत्वमस्य स्पष्टमिति परोक्तं युक्तम् । सर्वस्याप्यस्य गगनतलरेखायमानत्वात् । आरुणकेतुके 'कूर्मः पुरुषो भूत्वोदतिष्ठदि'त्यत्रापुरुषस्य पुरुषभावापत्तिप्रतिपादनेन सहस्रशीर्षेत्यादिमन्त्रस्थपुरुषपदस्यानन्तरवाक्यप्रतिपन्नप्रवृत्तिनिमित्तकत्वव्यतिरेकस्यावसायात् । अन्यथा तेन प्रवृत्तिनिमित्तेन प्रागपि तस्य पुरुषशब्दाभिलप्यतया पुरुषो भूत्वेत्युक्तिविरोधापत्तेः । परोक्तरीत्यैव 'पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः । साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥' इति स्कान्दोक्तेः पूर्णत्वेन प्रवृत्तिनिमित्तेन पुरुषशब्दस्य शिवे असाधारण्यात् 'यत्रयत्र कर्मभ्रेषो वा यज्ञभ्रंशो वा, तत्रतत्र पुरुषं विचिन्तयन् पुरुषसूक्तं ब्रूयात् पूर्णत्वात्पुरुष इति विज्ञायतेही'ति वाधूलसूत्रे पुरुषसूक्तश्रुततत्प्रतिपाद्यपरपुरुषशब्दस्य तत्प्रवृत्तिनिमित्तकत्वावसायात् । 'सर्वो वै रुद्रः' इत्युक्त्यनन्तरमौचित्यात् 'पुरुष एवेद सर्व'मिति मन्त्रविरोधशङ्कानिराकरणार्थया 'पुरुषो वै रुद्र' इत्यादिश्रुत्या तस्य रुद्रपरत्वेन व्याख्यानाच्च तस्य परमशिवश्रुतित्वस्यैव सूपपादत्वान्महापुरुषशब्दस्यापि क्वचिदपि नारायणनामत्वेनानुशासनाभावात् प्रयोगमात्रस्य गौतमस्मृतिपाठितकृच्छ्रमन्त्रेषु महापुरुषायेति शिव इव योगेनाप्युपपत्तेरतदभिधानत्वात् तथात्वेऽपि 'पुरुषं महान्तमि'ति पृथक्पदयोरेवेह श्रवणेन तस्याश्रवणादवयवार्थव्यवस्थितिसिद्धौ योगरूढपदप्रतिपाद्यावयवार्थपरवाक्यस्यान्यत्रापि प्रयोगस्य दुर्निवारत्वात् अन्यथा पङ्कजादिशब्दानां योगरूढिवादिना केवलयोगवादिनं प्रत्यन्यत्रापि

प्रयोगप्रसङ्गस्यापादकोक्तौ मूकीभावापत्त्याऽऽपादयितुमशक्यत्वापत्तेः । भवादिशिव-नामाष्टकमध्ये पठितस्य 'अथाष्टभिर्नामभिरि'त्यादिबोधायनसूत्रे तन्नामत्वेन व्यवहृ-तस्य 'पूज्यते यत्सुरैर्नित्यं महांश्चैव प्रमाणतः । धातुर्महेतिपूजायां महादेवस्ततस्स्मृतः ।' इति साम्बपुराणे तन्नामत्वेन निरुक्तस्य महच्छब्दस्य पुरुषं महान्तमिति पाठे ना-मतश्शिवपरत्वस्यैव प्रतीतेः 'अम्भस्यपार' इति सूक्ते 'यमन्तः समुद्रे कवयो वयन्ति विद्युतः पुरुषादधी'ति उपन्यस्तालिङ्गयोः 'लिङ्गमूर्तिं महाज्वालामालासंवृतम-व्ययम् । लिङ्गस्य मध्ये रुचिरं चन्द्रशेखरविग्रहम् । व्योममार्गे तथा लिङ्गे ब्रह्मा-णं हंसरूपिणम् । विष्णुं वराहरूपेण लिङ्गस्याधस्त्वधोमुखम् ॥ ब्रह्माणं दक्षिणे तस्य कृताञ्जलिपुटं स्थितम् । वामे विष्णुं महाबाहुं कृताञ्जलिपुटं तथा ॥ मध्ये लि-ङ्गं महाघोरं महाब्धेरम्भसि स्थितम् । ध्यात्वा प्रदोषसमये[1] शिवसायुज्यमाप्नुया-त् ॥ एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः । भोगिशय्यागतश्शेते त्रैलो-क्यज्ञानबृंहितः ॥ जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः । ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ॥ सुष्वाप योगशयने एकीभूयाऽथ विष्णुना । ब्रह्मा कमलवर्णाभो रुद्रः कालाग्निसन्निभः ॥ पुरुषः पुण्डरीकाभो रूपं तत् परमात्म-नः । तप्तहेमनिकाशाभं शितिकण्ठं त्रिलोचनम् ॥ प्रसादसुमुखं वीक्ष्य प्रणेमुर्जा-तकौतुकाः ॥' इत्यादिपुराणदर्शनात् । 'हिरण्यगर्भ' इत्यादिमन्त्राष्टकस्य च 'य ई-शे अस्य द्विपदश्चतुष्पद' इति 'एतावन्तो वै पशवः द्विपादश्च चतुष्पादश्चे'ति श्रुत्यन्तर-प्रतिपन्नद्विपाच्चतुष्पाद्रूपपशुपतित्वलिङ्गोपन्यासेन हिरण्यगर्भश्रुत्या च शिवप्रजापति-साधारण्यात्तस्य नारायणैकान्त्यासिद्ध्या तदेकवाक्यतया च 'ह्रीश्च ते लक्ष्मीश्च प-त्न्यौ' इत्यत्र ह्रल्लेखावाच्योमापतित्वलिङ्गस्यापि प्रतीत्या लक्ष्मीपतित्वलिङ्गेन नवोत्त-रनारायणस्य नारायणपरत्वव्यवस्थित्ययोगेन तदेकवाक्यतयापि परेप्सितानिर्वाहात् 'अम्भस्यपार' इत्यादेरन्ते 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि तन्नो रुद्रः प्रचोदयात्' इति श्रवणान्मध्येऽपि 'नैनमूर्ध्वं न तिर्यञ्चमेष हि देवः प्रदिशोनु सर्वाः विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादीनां मन्त्रोपनिषदथर्वशिरस्समाम्नातानां मन्त्राणां प्रत्यभिज्ञानात् 'प्रजापतिश्चरति गर्भे अन्तरि'त्यत्र प्रजापतिशब्दस्य परमत इव योगेन 'यस्मात्पाति प्रजास्सर्वाः प्रजापतिरिति स्मृतः । देवेषु च महादेवो महान् देवस्ततः स्मृतः ॥' इति लैङ्गे शिवनामसु च निर्वचनदर्शनेन शिव एव प्रवृ-त्त्युपपत्तेः 'हिरण्यमस्य गर्भेऽभूत् हिरण्यस्यापि गर्भजः । तस्माद्धिरण्यगर्भोऽ-सौ पुराणेऽस्मिन्निरुच्यते ॥ इति' तत्रैव निर्वचनात् बोधायनसूत्रे शिवशङ्करादि-द्वादशनाम्नां मध्ये परिगणनाच्च । 'हिरण्यगर्भस्समवर्तताग्र' इत्यत्र हिरण्यगर्भश-ब्दस्यापि तत्र प्रवृत्त्युपपत्तेः 'हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयती'ति वाय-

---

१. प्रदोषकालेषु इति पाठान्तरम् ॥

व्यपशौ ऐन्द्रे द्वितीयाधारे विनियोगवत् नारायणसमाराधने तद्विनियोगस्याप्यविरोधाच्च तदेकवाक्यत्वात् 'ह्रीश्च त' इति मन्त्रस्य केषांचित् ग्रहयज्ञे सोमाधिदैवतगौरीपूजायां विनियोगस्य स्मृत्यर्णवादिषूक्तत्वात् अन्यत्र च विनियोगानुपलम्भात् प्रथमश्रुतत्वाच्च ह्रल्लेखाह्वयभुवननायिकापरत्वात् तदनुरोधेन लक्ष्मीशब्दस्य वायुसंहितायां 'तत्र माहेश्वरी लक्ष्म्या मूर्तिर्मूर्तिमतः प्रभोः' ॥ इत्यारभ्य 'तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी वरा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥' इति श्रुतायां महेश्वरशक्तिरूपायां परशक्त्यंशलीलायां वृत्त्युपपत्तेः 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति वाजसनेयिपाठे श्रीशब्दस्य समानप्रकरणगतह्रल्लेखाश्रुत्यनुरोधेनोमायामेव 'श्रियं लक्ष्मीमौपलामम्बिकां गामि'त्यायुष्यसूक्ते तत्र प्रयोगदर्शनाद्वृत्त्युपपत्तेः । ह्रल्लेखायाः कमलायां प्रयोगादर्शनेन वैपरीत्यशङ्कानवकाशात् लैङ्गे ब्रह्मनारायणकृतशिवस्तोत्रे 'नमोऽस्तु लक्ष्मीपतये श्रीपते ह्रीपते नमः ॥' इति शाखाभेदभिन्नपाठद्वयोपसंहारेण उपबृंहणाच्च 'ह्रीश्चते लक्ष्मीश्च पत्न्या'वित्यनेन उमापतित्वलिङ्गाभिधानप्रतीतेः, 'अहोरात्रे पार्श्वे' इत्यस्य 'शर्वरी त्वमहं दिनमि'ति उमामहेश्वरसंवादोक्तेरर्धनारीश्वररूपे स्वारस्यात् 'नक्षत्राणि रूपमि'त्यस्य 'स्वरूपं त्रिपुरघ्नस्य वक्ष्ये कालस्वरूपिणः । येनाम्बरं मुनिश्रेष्ठा व्याप्तं लोकहितैषिणा । यत्राश्विनी च भरणी कृत्तिकायास्तथांशकः । मेषराशिःकुजक्षेत्रं तच्छिरः कालरूपिणः ॥' इत्यादिना 'प्रोष्ठपद्यंश एकश्च उत्तरा रेवती तथा । द्वितियं जीवसदनं मीनस्तु चरणावुभौ ॥' इत्यन्तेन वामनपुराणवचनजातेन प्रतिपादिते कालात्मके भगवद्विग्रहे सामञ्जस्यात् कार्त्स्न्येन श्रीरुद्राङ्गमन्त्रत्वेन विधानाच्च उत्तरनारायणस्य शिवपरत्वनिश्चयात्तदेकवाक्यतयापि तत्परत्वस्यैव सुकरोपपादनत्वात् श्रुत्यन्तरशब्दार्थप्रत्याभिज्ञानानुरोधेऽपि तत्सारूप्यबाहुल्येन शिवपरत्वस्यैव युक्तत्वात् । 'पुरुषेण नारायणेन यजमान उपतिष्ठत' इत्यत्र 'अस्य पौरुषसूक्तस्य ऋषिर्नारायणः स्मृत' इति शौनकस्मृतेः देवताद्योतनाय पुरुषेणेतिसूक्तप्रतिपाद्यपरपदेन व्यपदेशानन्तरम् ऋषिसूचनाय 'नारायणेनेति त्रिजपेदघमर्षणमि'तिवत् ऋषिनाम्ना व्यपदेशोपपत्तेः । 'नारायणदृष्टेन पुरुषसूक्तेन उपस्थितां चितिमुपातिष्ठमान इह जन्मनि पुरुषो भवेदि'ति बाधूलसूत्रेण तथैव स्पष्टीकरणाच्च नारायणसमाख्यानेनापि तत्परत्वासिद्धेः । प्रत्युतोदाहृतकल्पसूत्रवचनजातेन नारायणस्य ऋषित्वसिद्धेः वेदाहमेतमित्यत्राहंशब्दस्य तत्परतया 'कर्मकर्तृव्यपदेशाच्चे'ति सूत्रोक्तन्यायेन सूक्तप्रतिपाद्यस्य स्वरसतो व्यतिरेकस्यैव प्रतीतेश्च । तस्मात्परोक्तन्यायैर्नारायणपरत्वासिद्धेः तैरेव शिवपरत्वस्य सुसाधत्वाच्च अस्मदुक्तरीत्या शिवमहिमप्रतिपादनपरमेव पुरुषसूक्तमित्यभ्युपगन्तव्यम् ॥२४॥

किं च  वदन् सर्वात्मत्वं विबुधसमुपास्यत्वमपि ते
विरिञ्चोपेन्द्रादीनपि तव विभूतीरुपदिशन् ।
निरुक्त्या ते नाम्नामपि च विभवं ते विशदयन्
गिरां गुम्भः श्रैष्ठ्यं प्रकटयति तेऽथर्वशिरसः ॥ २५ ॥

अथर्वशिरसि प्रथमखण्डे—'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन्' इत्युपक्रम्य को भवानिति पृष्टवतो देवान् 'सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यादिना 'एवं मां यो वेद स सर्वान् देवान् वेदे'त्यन्तेन शिववचनेन शिवस्य सर्वात्मत्वं प्रतिपादितम् । अनन्तरं 'ततो देवा रुद्रं नापश्यन् ते देवा रुद्रं ध्यायन्ति ततो देवा ऊर्ध्वबाहवस्स्तुन्वन्ती'ति देवैरुपास्यमानत्वं स्तूयमानत्वं च दर्शितम् । ततश्च द्वितीयखण्डे—'यो वै रुद्रस्स भगवान् यश्च ब्रह्मा भूर्भुवस्सुवः तस्मै वै नमो नम' इत्यारभ्य यश्च विष्णुर्यश्च महेश्वर इत्यादिप्रकारेण ब्रह्मविष्णुरुद्रोमालक्ष्मीसरस्वतीन्द्रादीनां महाभूतादीनां च तद्विभूतित्वं प्रथमखण्डोक्तसर्वात्मत्ववचनेन सिद्धं विशिष्य निरूपितम् । तृतीयचतुर्थखण्डयोस्तदीयनामवृन्दनिर्वचनमुखेन तस्य परभावस्स्फुटीकृतः । पञ्चमखण्डे तस्योपासनादेव मोक्ष इत्युक्त्वा पाशुपतयोगात्मकतदुपास्तिप्रकारो दर्शितः । तदेवमादित आरभ्यान्तं विमृश्यमानमथर्वशिरोवचनजातं स एव सर्वतो ज्यायानिति स्पष्टीकरोतीत्यर्थः ॥२५॥

यत्त्वत्र परैः प्रलपितम्—अथर्वशिरसि रुद्रस्य सार्वात्म्योपदेशात् न तस्य सर्वेश्वरत्वसिद्धिः, वामदेववच्छास्त्रदृष्ट्या तदुपदेशात् । अत एव तदनन्तरं परमात्मनः खलु सार्वात्म्यं प्रसिद्धं, तत्कथं तवेति शङ्काव्यवच्छेदाय स्वस्मिन् परमात्मानुप्रवेशात् तद्दृष्ट्या सार्वात्म्योक्तिमुपपादयितुं तस्यैव वचनं—'सोऽन्तरादन्तरं प्राविशात् दिशश्चान्तरं सम्प्राविशदि'ति । अत्र स इति परमात्मोच्यते । अनन्तरवाक्यस्य परमात्मदृष्ट्या सार्वात्म्योपदेशपरत्वेन तत्राहंशब्दस्य परमात्मपर्यन्ततया तस्य प्रस्तुतत्वात् । स परमात्मान्तरात् प्राणादेरप्यन्तरं स्वात्मानं दिशस्सकलदिग्वर्तिवस्तुजातस्य चान्तरं जीववर्गमन्तर्यामितया प्राविशदिति तस्यार्थः । न चोक्तार्थपरमिदं वाक्यं रुद्रस्यैव सर्वान्तर्यामितया प्रवेशकथनपरं, पूर्ववाक्यमपि स्वरूपेणैव तस्य सार्वात्म्यकथनपरमस्तु इति वाच्यम् । तथासत्यस्य वाक्यस्य रुद्रवाक्यमध्यपठितत्वेनाहं प्राविशमिति प्रयोगापत्तेः । न च 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यत्रस्येनेति ... स्य
स्य समाप्त्यवगमात् 'सोऽन्तरादि'त्यादिश्रुतिवाक्यमेवेति वाच्यम्
नन्तरमपि 'सोऽहं नित्यानित्य'इत्यादिरुद्रवाक्यानुवृत्त्या तत्समाप
मध्ये श्रुतिवाक्येन शिववाक्यसन्दर्भविच्छेदे उत्तरत्र सोऽब्रवी

इहात्मीये रूपे वरद परिपृष्टे तव सुरैः
त्वयान्यस्यैवोक्तं तदिति किमियं ग्रन्थघटना ।
त्वमन्तर्यामी संस्तमितरमवोचः स्वयमिति
प्रलापो वा केषां विशति हृदयान्यप्यविदुषाम् ॥१७॥

युक्तं प्रतर्दनाख्यायिकायां 'मामेव विजानीही'त्यादेरिन्द्रवाक्यस्य शास्त्रदृष्ट्या ब्रह्मविषयत्वम् । तत्र 'त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस' इति प्रश्नवाक्यस्य वस्तुतो यद्धिततमं, तद्विषयत्वेनेन्द्रविषयत्वाभावात् । युक्तं च 'अहं मनुरभवं सूर्यश्चे'त्यादिवामदेवसार्वात्म्यकथनस्यापि शास्त्रदृष्ट्या ब्रह्मविषयत्वं, तत्र प्रश्नवाक्यस्यैवाभावात् । इह तु देवानां 'को भवानि'ति शिवासाधारणरूपस्य प्रश्ने तदुत्तररूपस्य 'अहमेकः प्रथममासमि'त्यादिशिववाक्यस्यान्यसार्वात्म्यपरत्वे प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः नेह तन्न्यायसञ्चारणावकाश इति 'सर्वो वै रुद्रः रुद्रो ह्येवैतत्सर्वम्' इत्यादिश्रुतिकल्पसूत्रादिवचनान्तरानुगृहीतैतच्छ्रुतिबलात् 'सर्वं खल्विदं ब्रह्मे'ति सर्वात्मत्वेन प्रतिपन्नं ब्रह्म शिव एवाध्यवसीयते। अतो यद्यनेकस्य सार्वात्म्योपदेशो विरुद्ध इति सौबालश्रुताविह वा क्वचिच्छास्त्रदृष्ट्या उपदेश इति नेतव्यं, तदा वैयधिकरण्यदोषाप्रसङ्गात् तत्रैव तदुपदेशस्तथा नेतव्यः । तथासति 'चक्षुश्च द्रष्टव्यं च नारायण' इत्याद्यनन्तरं मन्त्रोपनिषदादौ शिवपरतया प्रतिपन्नेन 'पुरुष एवेदं सर्व'मिति मन्त्रेण तदुपसंहारोऽपि शोभतेतराम् । न चाहंशब्दस्य वक्तरि शिव एव पर्यवसाने तदन्यस्य शब्दसन्निधापितत्वाभावात्स इत्यनेन तदन्यपरामर्शानुपपत्तेः स्वस्य तत्पदेन परामर्शापत्तिरिति कुदृष्टिभिर्वक्तुमपि शक्यम् । यत्र यस्यानुपचरिताहंपदप्रयोगः, तत्र तस्यैव तत्पदप्रयोगस्योपपन्नत्वाभ्युपगमे सोऽन्तरादित्यादेर्वक्तृशिवपरत्वस्यैव सम्भवेन तत्पक्षे तत्र दूषणानवकाशापत्तेः। किं च सोऽन्तरादित्यादिशिववाक्यं तत्र सइतिपदं चाहंपदसन्निधापितपरामर्शीति परपक्षेऽपि तस्य वाक्यस्य शिवस्यैव सर्वान्तर्यामित्वप्रतिपादनपरत्वं युक्तम् । परैर्गीतासु 'तमेव शरणं गच्छ, मद्याजी मां नमस्कुरु ।' इत्यादौ तत्पदाहंपदयोरन्तरात्मदृष्टिं विना स्वात्मन्येव पर्यवसानाभ्युपगमेन स्वात्मनि तत्पदप्रयोगोऽनुपपन्न इति शङ्कितुमप्यशक्यत्वात् अहंशब्दस्य श्रोतृभिर्वक्तृव्यतिरिक्तपरत्वानवगमेन स इत्यस्य तान्प्रति तद्व्यतिरिक्तबोधकत्वानुपपत्तेश्च । न च मध्ये कुदृष्टिकल्पितशङ्कया तस्य तद्बुद्धिस्थत्वात् कथञ्चित् बोधकत्वं शक्यम् । शङ्कावाक्यस्य गमकस्य चानुपलम्भेन तथा दुश्शङ्काकल्पनायाः प्रमाणपराहतत्वात् शिवस्यैव सर्वान्तर्यामित्वेन तेन तदन्यस्यान्तर्यामित्वमुपदिष्टमिति वाक्यार्थकल्पनाया अत्यन्तमयुक्तत्वाच्चेति तात्पर्यनिष्कर्षः ॥२७॥

कुतोऽस्य सर्वान्तर्यामित्वमधिगम्यत इति चेत् , तत्राह—

त्वमेवान्तर्यामीत्यधिगमितमेतत्खलु विभो
अशेषाधिष्ठानप्रकटनपरैरौपनिषदैः ।
त्विषांपत्युर्बिम्बे कृतनिवसतेस्तस्य भगवन्
उमानेत्रानन्दं वपुरुपदिशद्भिश्च मनुभिः ॥ १८ ॥

श्रूयन्ते हि शिवस्याशेषाधिष्ठानप्रतिपादनपरा मन्त्राः मन्त्रोपनिषदि—'यो योनिं योनिमधितिष्ठत्येकः यस्मिन्निदं सं च वि चैति विश्वम्' 'एवं स देवो भगवान्वरेण्यो योनिस्स्वभावानधितिष्ठत्येकः । सर्वमेतद्विश्वमधितिष्ठत्येकः गुणांश्च सर्वान्विनियोजयेद्यः । घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टः । यो देवोऽग्नौ यो अप्सु यो विश्वं भुवनमाविवेश । य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमोनमः'। इत्याद्याः । रुद्रोपनिषदि च 'नमो भवाये'त्याद्यनुवाकपञ्चके—'नमः स्रोतस्याय च द्वीप्याय च ।' इत्याद्याः सर्वेषु वस्तुषु शिवस्य सद्भावप्रतिपादनपराः । महोपनिषदि च— 'यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश ।' इत्याद्याः । अपि च 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादिश्रुतिप्रतिपाद्योऽन्तरादित्यवर्ती पुरुषस्तावदन्तर्यामीति सर्वसम्प्रतिपन्नमेवैतत् । 'भेदव्यपदेशाच्चान्य' इति ब्रह्मसूत्रेण ज्ञापनात् । तस्य च महोपनिषदि 'आदित्यो वा एष एतन्मण्डलमि' त्यादितत्प्रकरणे 'सर्वो वै रुद्र' इत्यारभ्य 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमोनमः' इति मन्त्रः, रुद्रोपनिषदि 'असौ यस्ताम्रो अरुण' इति प्रस्तुत्य 'असौ योऽवसर्पति नीलग्रीवो विलोहितः' इत्यादिमन्त्रः, कृच्छ्राङ्गादित्योपस्थानमन्त्रेषु 'नमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचराधिपतये हरये शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमोनमः सूर्यायादित्याय नमोनमः नमो नीलग्रीवाय शितिकण्ठाय नमोनमः नमश्चन्द्रललाटाय कृत्तिवाससे नमः' इत्यादिमन्त्राश्च उमासहायत्वनीलग्रीवत्वादिविशिष्टं रूपमुपदिशन्ति । न च महोपनिषदि 'सर्वो वै रुद्र' इत्यारभ्य सवितृमण्डलविद्याप्रकरणविच्छेदश्शङ्कनीयः । असम्बन्धिपदनिचयव्यवधानादेर्विच्छेदकस्याभावात् अन्तरादित्यवर्तिनो हिरण्मयपुरुषस्योपासनार्थमपेक्षितरूपविशेषसमर्पणपरत्वेनैकवाक्यत्वस्य समर्थत्वात् । कूर्मपुराणे सूर्यहृदये—'नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे । त्वमेव ब्रह्म परममापो ज्योतीरसोऽमृतम् । भूर्भुवस्स्वस्त्वमोङ्कारस्सर्वो रुद्रस्सनातनः । पुरुषस्त्वं महोऽतस्त्वां प्रणमामि कपर्दिनम् । त्वमेव विश्वं बहुधा जातं यज्जायते च यत् । नमोऽग्निजाय रुद्राय त्वामहं शरणं गतः । प्रचेतसे नमस्तु-

म्यं नमो मीढुष्टमाय च । नमोनमस्ते रुद्राय त्वामहं शरणं गतः । हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः । अम्बिकापतये तुभ्यमुमायाः पतये नमः ॥' इति 'सर्वो वै रुद्र' इत्याद्यनुवाकत्रयस्य 'घृणिस्सूर्य' इत्याद्यनुवाकैकवाक्यतयान्तरादित्यविद्यापेक्षितरूपसमर्पणपरत्वस्य स्पष्टीकरणाच्च । न च कृच्छ्राङ्गमन्त्रेषु हरिपदप्रयोगाद्विष्णुपरत्वं शङ्कनीयम् । पूर्वापरबहुश्रुतिलिङ्गविरोधात् 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजि'ष्विति कोशदर्शनात् आदित्यनामत्वेनैव तदन्तर्यामिणि प्रयोगोपपत्तेः 'एष रुद्रो महादेवः कपर्दी च घृणी हरिः । आदित्यो भगवान् सूर्यो नीलग्रीवस्त्रिलोचनः ॥ अधीयते सहस्रांशुस्सामगाध्वर्युहोतृभिः ॥' इति कौर्मे आदित्यमण्डलान्तर्वर्तित्वेन परम शिवस्य प्रतिपादकेषु दक्षं प्रति दधीचवचनेषु हरिपदप्रयोगस्य तथैव निर्वाह्यत्वाच्च । ननु, छान्दोग्योपनिषदि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इत्युपक्रम्य 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति पुण्डरीकाक्षत्वोपन्यासेन तस्य वैष्णवं रूपमुपदिशतीति प्रतीयत इति चेत् , न तावत्पुण्डरीकतुल्यनयनत्वं तस्यासाधारणलिङ्गं, लोकवेदयोरन्यत्रापि च बहुलं तत्प्रसिद्धेः । तस्य साधारण्येऽपि पुण्डरीकाक्षशब्दस्य योगरूढ्या विष्णावसाधारण्योपपत्तेश्च । नापि 'तस्य यथे'त्यादिश्रुतिरिति वक्तुं शक्यते । न च योगरूढशब्दावयवार्थपरवाक्यस्यापि प्रयोगनियमोऽस्तीत्युक्तं पुरुषसूक्तार्थविचारे । तथापि लोचनद्वयोपन्यासस्त्र्यम्बके रूपे न सङ्गच्छत इति चेन्न । हविरार्त्यधिकरणन्यायादुद्देश्यगतद्वित्वस्याविवक्षिततया अपरिच्छेदकत्वात् ललाटलोचनस्य मुकुलितत्वेन लोचनद्वयस्यैव विकासितनलिनसादृश्यमिति तस्य विवक्षितत्वेऽप्यविरोधाच्च । छान्दोग्योपनिषदपि महोपनिषद्रुद्राध्यायमन्त्राभ्यां निर्धारिते शैव एव रूपे पर्यवस्यतीति न विरोधः । अत एव वायुसंहितायामुदाहृतश्रुतित्रयस्यापि शिवविषयत्वेनोपसंहारो दर्शितः—'सर्वो रुद्रो नमस्तस्मै पुरुषस्सन् परो महान् । हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः । अम्बिकापतिरीशानः पिनाकी वृषवाहनः ॥' इत्यारभ्य 'हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च । योऽयं सर्पत्यसौ देवो नीलग्रीवो हिरण्मयः ॥' इत्यन्तेन । एवं च यदाग्नेयपुराणे विष्णुसमाराधनविधानान्ते 'ध्येयः सदा सवितृमण्डलमध्यवर्ती'त्यादि पठ्यते, तत् सवितृमण्डलस्य हृदयादिवत्सकलदेवतोपासनास्थानतया विष्णुपूजान्ते च तत्र तदुपस्थानं कर्तव्यमिति तावन्मात्रपरम् । पुराणेष्वागमेषु च दुर्गागणपत्यादिपूजकानामपि सन्ध्यासमये पूजान्ते च तत्र तत्तद्देवतोपासनाविधानदर्शनादिति न कश्चिद्विरोधः । एवं शिवस्य सर्वाधिष्ठानप्रतिपादनेनान्तर्यामिणि शैवरूपोपदेशेन च शिव एव सर्वान्तर्यामीत्यौपनिषदा मन्त्रास्समधिगमयन्तीत्यर्थः । ननु, 'एष सर्वभूतान्तरात्मे'ति नारायणस्यान्तर्यामित्वं श्रूयते, सत्यं , श्रवणमिहाप्यविशिष्टं, किं तु आदित्यमण्डले शैवमधितिष्ठन्वपुः पुनः । अन्तर्नियं-

च्छतीत्येष निर्णयो निरवग्रहः ॥ अतः कृष्णे दशास्यादिहन्तृत्वव्यपदेशव त्। तादृशां वेदवचसां युक्तं तात्पर्यवर्णनम् ॥ अवतारेषु भिन्नानां चरितानां रमापतेः। अन्यथा न व्यवस्था स्यादपरत्रापि कीर्तनात्। अन्यावतारचरितानि च भारतादौ कर्माणि यानि पुरुषोत्तमसाधितानि । गङ्गासुतप्रभृतिभिस्तदभेददृष्ट्या कृष्णस्तुतिप्रकरणेषु हि कीर्तितानि ॥ तस्मात् प्रबलप्रमाणानुरोधाच्छिव एव सर्वान्तर्यामीति निर्णये तत्रैवान्तर्यामिब्राह्मणादेरपि पर्यवसानमित्यङ्गीकरणीयम्। केचित्तु 'एतानि हवा अमृतस्य नामधेयानी'ति जाबालश्रुतिप्रयोगदर्शनेन निरुपपदामृतपदस्य शिवपरत्वस्वारस्यात्तत एवान्तर्यामिब्राह्मणस्य शिवपरत्वं व्यक्तमित्याहुः ॥ २८ ॥

इतश्च शिव एव सर्वान्तर्यामीति वक्तव्यमित्याह—

महाभूतान्यर्कश्शिशिररुचिरात्मेति भगवन्
अशेषं वस्त्वेतत्तव खलु तनुत्वेन विदितम् ।
अधिष्ठातृत्वं ते हर किमियता नाध्यवसितं
मुधा मूर्खानेतान्मुखरयति मोहास्त्वितरथा ॥२९॥

अष्टौ पृथ्व्यादयस्तावत् मूर्तयः पुरवैरिणः । प्रसिद्धाश्शैवलैङ्गादिपुराणेष्वागमेषु च ॥ अन्तर्यामिब्राह्मणेऽपि तेऽन्तर्यामिण ईशितुः । नियम्यभावमापन्नाश्शरीराणीति [illegible]णिताः ॥ अतस्तदैकरूप्येण मूर्त्यष्टकपरा गिरः। सर्वान्तर्यामितां शम्भोः साधयेयुर्निरङ्कुशम् । नन्वन्तर्यामिणस्तत्र सह पृथ्वीजलादिभिः। शरीरत्वेन वर्ण्यन्ते वस्तूनि सकलान्यपि । अष्टावेव तु पृथ्व्याद्या मूर्तयो गिरिजापतेः। प्रसिद्धास्तत एवासावष्टमूर्तिश्च गीयते । तस्मादन्तर्यमयितुस्समस्तचिदचित्तनोः । पृथिव्याद्यष्टकतनुभिन्न एवेति युज्यते। उच्यतेऽष्टासु कामारेरन्तर्भवति मूर्तिषु । अन्तर्यामिब्राह्मणोक्तं नियम्यं सकलं वपुः । भूतेषु तद्विकाराणामप्यन्तर्भावसम्भवात् । 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।' इति स्मृत्योपकरणं मायान्तर्यामिणो विभोः। निरुक्तेति नियम्येषु न कैवल्यं तदग्रहात् । अत एव च कालस्य योगस्य शिवमाययोः। न सङ्ग्रहः कुतोऽत्रेति शङ्कापि विनिवर्तिता । आत्मा तस्याष्टमी मूर्तिश्शिवस्य परमा तनुः। व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् । इति शैवे समीरेण षट्कुलीनानृषीन् प्रति । जीववर्गस्तु कार्त्स्न्येन कथितो मूर्तिरष्टमी । एवं गृहीते कार्त्स्न्येन वर्गे चिदचिदात्मके । किंनाम भुवने वस्तु सङ्ग्राह्य-

मवशिष्यते॥ ननु च॥'भूम्यम्भोऽग्निमरुद्व्योमभास्करा दीक्षितश्शशी।' इति लैङ्गेऽह्यष्टमात्मस्थाने यज्वा निवेशितः। अतश्छागपशुन्यायादौचित्यादुपसंहृतेः। शैवे श्रुतोऽप्यात्मशब्दो विशेषे पर्यवस्यति॥ नैतद्युक्तम्॥ व्यार्पिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम्॥ इत्यस्या घटनात्तस्य सामान्यपरतां विना। वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा।शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जगत्। सर्वोपकारकरणं सर्वानुग्रहणं तथा। सर्वाभयप्रदानं च शिवस्याराधनं विदुः। देहिनो यस्य कस्यापि क्रियते यदि निग्रहः॥ अष्टमूर्तेरनिष्टं तत्कृतमेव न संशयः। इत्यनन्तरसन्दर्भे सर्वेषामेव देहिनाम्। अविशेषेण भगवन्मूर्तित्वोक्तेश्च वैशसात्।सामान्यविधिरस्पष्टस्संह्रियेत विशेषतः। स्पष्टोऽयमित्यतोऽप्यस्य युज्यते नोपसंहृतिः। लैङ्गे यदात्मसामान्यस्थाने दीक्षितकीर्तनम्। लोकोपकारातिशयख्यापनार्थं तु तत् क्वचित्। विश्वरूपस्य देवस्य सरोजभवसम्भव। भूम्यम्भोऽग्निमरुद्व्योमभास्करा दीक्षितश्शशी। इति तत्र ह्युपक्रम्य मूर्तीनां सम्प्रदर्शिता। एकैकस्याः प्रपञ्चेन सर्वलोकोपकारिता। एवं तदन्यथासिद्धं तत्र दीक्षितकीर्तनम्। आत्मान्तराणां मूर्तित्वं न निषेधेत्पिनाकिनः। यथाग्निवाक्ये कासाञ्चिद्विकृतीनामनुक्रमः। प्रकृत्यैकविधानार्थो नान्यास्त्वग्नेर्निवारयेत्। यथा च विद्याभेदेषु पथः प्राप्तस्य कीर्तनम्। स्तुत्यर्थमाध्यानार्थं वा न तमन्यासु वारयेत्। लैङ्गेऽपि तत्कृताशेषलोकानुग्रहवर्णने। दीक्षितग्रहणेऽप्यन्ते सामान्येनोपसंहृतम्। आत्मा तस्याष्टमी मूर्तिस्सर्वभूतशरीरगः। इत्यादिवचनैश्शैवपुराणोक्तेन वर्त्मना। तद्विश्वमूर्तिरेवेत्थमष्टमूर्तिः प्रगीयते। विभक्तमष्टधा विश्वमधितिष्ठत्ययं यतः। यद्येवं नेष्यते सर्वं चेतनाचेतनात्मकम्। अन्तर्भूतं महेशस्य जगदष्टासु मूर्तिषु। तदा तु शिवमूर्तीनां न परिच्छेदिकाऽष्टता। अवगुत्यानुवाद्या सा वैश्वानरकपालवत्। यथा तत्र कपालेषु द्वादशस्वष्ट केवलम्। अवगुत्यानुगण्यन्ते स्तुतिभेदविवक्षया। एवं वस्तुषु लोकेषु मूर्तिभूतेषु शूलिनः। अनूद्यन्ते विशिष्याष्टौ स्तुत्यर्थमिति कल्प्यते। यद्वा मूर्तिष्वसङ्ख्यास्वप्यष्टानामिह वर्णनम्। नामभेदविधानार्थमर्चनायेति कल्प्यते। शैवादिषु पुराणेषु मूर्त्यष्टकनिरूपणे। अष्टानामपि मूर्तीनां नामभेदानुशासनात्। दृष्टं हि दशरात्रादेस्सत्स्वहस्स्वितरेष्वपि। प्रमाप्त्यै नामभेदार्थं सौत्यानामनुकीर्तनम्। अथवैकादशस्वेव सत्प्रमाणा इव क्वचित्। ध्यानार्थं मूर्तयः काश्चित् गृह्यन्त इति कल्प्यते। स्थानेष्वेतेषु

१. लैङ्गवचस्यात्मस्थान इति पठान्तरम्॥

ये रुद्रं ध्यायन्ति प्रणमन्ति च । तेषामष्टतनुर्देवो ददाति परमं पदम् । इति पौराणिकैस्तासु विशिष्याष्टासु मूर्तिषु । विश्वमूर्तेरपीशस्योपासनाभेदवर्णनात् । अथवा वाजिशाखोक्तषष्ठाग्न्यनुमतावपि । साम्यादिकाग्न्यभिप्रायात् दृष्टं पञ्चाग्निकीर्तनम् । एवं च मूर्तिष्वष्टानां वैशिष्ट्येनैव केनाचित् । अष्टमूर्तिरिति ख्यातिरपि देवस्य युज्यते । दृष्टा षट्त्रिंशताऽहोभिः सम्पाद्यस्यापि च क्रतोः । प्रधानत्वेन सौत्यानां द्वादशाह इति प्रथा । सर्वथापि च मूर्तित्वमन्तर्यामितया विभोः । अनुप्रवेशादेवैषामष्टानामिति युज्यते । अष्टमूर्तिप्रक्रियासु पुराणेष्वागमेषु च । अन्तर्यामिब्राह्मणार्थप्रत्यभिज्ञानदर्शनात् । पृथिव्यां तिष्ठति विभुः पृथिवी वेत्ति नैव तम् । रूपं च पृथिवी यस्य तस्मै भूम्यात्मने नमः । इत्यादित्यपुराणादिश्रुतमूर्त्यष्टकोक्तिषु । स्फुटं तत्प्रत्यभिज्ञानं न युक्तं ह्यपबाधितुम् । तस्मात् स भगवान् परमशिव एव सर्वान्तर्यामी । यत्तु 'तवान्तरात्मा मम चे' त्यादिस्मृतिवचनं, तन्महाभारते 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ॥' इति प्रश्ने 'बहवः पुरुषा राजन् साङ्ख्ययोगविचारिणः । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥' इति परमतमुपन्यस्य—'बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।' इति श्लोकेन 'स वा एष पुरुषोऽन्नरसमयः' इति श्रुतिदर्शनात् पुरुषशब्दाभिलप्यमानानां शरीराणां 'यथैका पृथिवी योनिरि'ति सैव सर्वशरीरभावेनावतिष्ठते । तथैकमेव परं पुरुषं विश्वं सर्वजीवभावेनावतिष्ठमानमाख्यास्यामीति स्वमतप्रतिज्ञानन्तरं पठितत्वादैकात्म्यपरं, न तु कस्यचिदन्तर्यामित्वविधानपरम् । अपृष्टोत्तरत्वापत्तेः । यच्च 'विष्णुरात्मा भगवतो भवस्यामिततेजसः । इत्यादिकर्णपर्ववचनं, तत्राप्यात्मशब्दो मोक्षधर्मे—'तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ।' इति कृष्णवचनश्रुतात्मशब्दवत् अभिन्नस्वरूपपरः । तत्रैव स्वारस्यात् । 'मायाया गुणभेदेन रुद्रं विष्णुं पितामहम् । सृष्टानुप्राविशत्तेषामन्तर्यामितया हरः ।' इति स्कान्दवचनदर्शनात् परमशिवस्य कर्मवश्यस्वांशभूतेषु जीवेष्विव तदवश्यस्वांशभूतासु गुणमूर्तिष्वपि अनुप्रवृत्तिसम्भवाच्च तस्यैव सर्वान्तरात्मत्वनिर्णयेनात्रात्मशब्दस्यान्तर्यामिपरत्वायोगाच्च । एवं च शिव एव सर्वान्तर्यामीत्यस्यार्थस्य व्यवस्थितेः 'सोऽन्तरादि'त्यादेरन्यपरत्वकल्पनायोगे स्थिते 'यो वै रुद्र' इत्यादेर्नारायणविषयत्वकल्पनं रुद्रेशानमहेश्वरमहादेवादिनामनिर्वचनस्य प्रसिद्धिविरुद्धं तद्विषयत्वकल्पनं, रुद्रोपासनाविधानस्य परोदितमधुविद्यान्यायेन तत्परत्वकल्पनं च परेषां निरस्तम् । भगवच्छब्दस्यान्यत्रापि पूज्यमात्रे पुराणादिषु प्रचुर-

प्रयोगादर्शनात्तस्यापि तदसाधारण्यासिद्धेश्च । यत्तु नामनिर्वचनानां प्रणवविषयत्वमुक्तं, तदप्ययुक्तम् । रुद्रेशानमहेश्वरादिनामनिर्वचनानां नामिनो जगत्सृष्टिपालनसंहारस्वातन्त्र्यप्रतिपादनपराणां प्रणवविषयत्वायोगात् । कथं तर्हि रुद्रादिनामसमानविषयत्वं तत्तोङ्कारप्रणवादिनामनिर्वचनानां, नामनामिनोरभेदोपचारात्। यथोक्तं वायुसंहितायां—'शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः । वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित् ॥' इति, 'तस्मादेकाक्षरं देवमाहुरागमपारगाः। वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः ॥' इति च ॥ तस्मादथर्वशिरोऽपि शिवस्यैव सर्वोत्कर्षं प्रतिपादयतीति सिद्धम् ॥२९॥

किं च शिवं नीलग्रीवं शिखरिपतिकन्यासहचरं
त्रिणेत्रं त्वां ध्येयं गिरिश दहराम्भोजकुहरे ।
विधायैकं साकं द्रुहिणकमलावल्लभहरैः
विभूतिं कैवल्यश्रुतिरखिलमाख्याति भवतः ॥३०॥

'विविक्तदेशे तु सुखासनस्थश्शुचिस्समग्रीवशिरश्शरीरः। अत्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य। हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् । अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्म योनिम् । तथादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्। स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट् । स एव विष्णुः स प्राणस्स कालोऽग्निस्स चन्द्रमाः । स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये।' इति कैवल्योपनिषदि शिवस्य दहरोपासनाविधिप्रकरणे सह ब्रह्मविष्णुरुद्रैस्सर्वस्यापि जगतस्तद्विभूतित्वाम्नानेन शिवस्य सर्वोत्कर्षस्स्फुटीकृत इत्यर्थः । नन्वत्र 'स ब्रह्मे'त्यादौ तत्पदानां सन्निहिते प्राप्यत्वेनोक्ते भूतयोनौ वृत्तेरुचितत्वात् ब्रह्मादीनां तद्विभूतित्वमेवाम्नातं सिध्यति, न तूपास्यविभूतित्वमिति चेन्न । भूतयोनिशब्दस्यापि यौगिकस्य सन्निहिते शिव एव वृत्तेः तत्क्रतुन्यायात्तदुपासनया तत्प्राप्तेरेव युक्ततया तस्य शिवान्यवृत्तित्वकल्पनायोगाच्च। कथं 'ज्ञात्वा तमि'ति तज्ज्ञानान्मुक्तिप्रतिपादनमिति चेन्न । सगुणब्रह्मवादे तज्ज्ञानादेव मुक्तेरुपपन्नतरत्वात्। निर्विशेषब्रह्मवादे सगुणब्रह्मज्ञानान्मुक्तिर्नोपपद्यत इति 'ज्ञात्वा तमि'त्यत्र तत्पदस्य निर्विशेषब्रह्मपरत्वस्यावश्यकतया पूर्वेषामपि तत्परत्वं सिध्यतीति चेत्, न । 'सदेव सोम्येदमग्र आसी'दित्यादिश्रुतौ 'तत्तेजोऽ-

सृजते'त्यादिवाक्यश्रुततत्पदानां सविशेषवृत्तावपि तत्त्वमसीति वाक्यश्रुततत्पदमात्रस्यैवानुपपत्त्या निर्विशेषे लक्षणावत् यत्रानुपपत्तिः, तस्यैव 'ज्ञात्वा तमि'ति तत्पदस्य तत्र लक्षणाया न्याय्यत्वेन योजनप्राप्यायां कावेर्यां मलमछुकबन्धनस्यायुक्तत्वात्। एवं चोमासहायत्वादिविशिष्टरूपेण सगुणेषूत्कृष्टस्य परमशिवस्य ध्यानात् तमोवश्यत्वरहितमखिलजगत्कारणं तमेव परमशिवमुपासकः प्राप्नोति, यद्विभूतयस्सर्वे ब्रह्मादयः क्रमेण निष्कृष्टचैतन्यैकतानस्य तस्यैव प्रत्यग्भावेन ज्ञानादपवर्गं प्राप्नोतीति श्रुत्यर्थस्सम्पद्यते । एवमेव चास्याः श्रुतेरर्थो वामनपुराणे षष्ठाध्यायेन प्रदर्शितः। तत्र हि कैवल्योपनिषत्प्रक्रिययैव 'पुराश्वलायनस्साक्षान्मुनिस्सत्यपरायणः । भगवन्तं जगन्नाथमुपेत्य परमेष्ठिनमि'त्यादिना आश्वलायनप्रश्नं, तत्र परमेष्ठिनः प्रतिवचनमुखेन 'अचिन्त्यमव्यक्तमनन्तरूपमि'त्यादिना सप्रपञ्चं शिवध्यानप्रकारं च प्रदर्श्य 'इत्थं ध्यात्वा मुनिस्साक्षात् साक्षिणं तमसः परम् । भूतयोनिं पुरारातिं गच्छति स्वात्मविद्यया । योऽयं ध्येयतया[1] प्रोक्तश्शिवस्साम्बस्सनातनः । ब्रह्मविष्ण्वादिरूपेण स विभक्त इव स्थितः । 'स ब्रह्मा स शिव' इत्यारभ्य 'ज्ञात्वा तं मृत्युमत्येति प्रत्यगात्मतयैव तु । अन्तरेण परिज्ञानं नान्यः पन्था विमुक्तये ।' इत्यन्तेनास्मदुक्तोऽर्थस्स्पष्टमादर्शितः। तथा ब्रह्मगीतासु चैवमस्याः श्रुतेरर्थः प्रतिपादितः । तस्मात् ब्रह्मादीनां प्राप्यविभूतित्वमेव, नोपास्यविभूतित्वमिति न युक्तम् ॥३०॥

उदाहृतकैवल्यश्रुत्यैकार्थ्येन तैत्तिरीयाणां महोपनिषद्याम्नातस्याणोरणीयानित्याद्यनुवाकत्रयस्यापि मध्यमानुवाकोपवर्णितनारायणमहिमप्रपञ्चनप्रसञ्जितान्यपरत्वशङ्कोन्मूलनपूर्वकं शैवदहरोपासनाविधिपरत्वव्यवस्थापनात् ततोऽपि तस्य सर्वोत्कर्षं विभावयति—

**तया संक्षिप्योक्तां तव दहरविद्यां विदधती**
**विशेषैरन्यैरप्युपनिषदुमाकान्त महती ।**
**अनुध्यानार्थं ते हृदि मुररिपोरान्तरतया**
**प्रसज्यैनं मध्ये प्रबलयति मोहं हतधियाम् ॥३१॥**

एवं तावदिह शङ्कोत्तिष्ठति—नारायणानुवाको न शिवोपासनापरः । 'सहस्रशीर्षं देवमि'त्यादिना नारायणस्य महिमानमुपवर्ण्य 'पद्मकोशप्रतीकाशमि'त्यादिना तदुपासनास्थानहृदयपुण्डरीकसंस्थानविशेषादिकं प्रदर्श्य 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित'इति तस्य तत्र स्थित्युपन्यासेन तस्य दहराम्बुजे नारायणोपासनाविधिपरत्वावसायात् । अत एव कैवल्योपनिषदीव ब्रह्मादिवन्नारायणस्य नोपा-

[1] योऽयं ध्येयस्तथा प्रोक्त इति पाठान्तरम् ॥

स्यविभूतिषु परिगणनं कृतम् । नन्वस्मिन्ननुवाके नोपासनाविधिः, किं तु 'तस्मिन्यदन्तस्तदुपासितव्यमि'ति पूर्वानुवाकाविहितोपासनापेक्षितगुणाविधिमात्रम् । तत्र यत्पदस्य गगनपदस्य वा उपास्यदेवतासमर्पणपरस्य शब्दस्य 'यो देवानां, यद्वेदादावि'ति पूर्वापरमन्त्रसमर्पितरुद्रमहेश्वरशब्दितविशेषपर्यवसायितया उत्पत्तिशिष्टकल्पशिवान्वयविरोधात् न नारायणस्योपास्यत्वेनान्वयो युज्यत इति चेत्, मा भूत्तत्रान्वयः । इहैव नारायणगुणगणवर्णनसामर्थ्यात् सम्भृत्यधिकरणन्यायेन तदुपासनाविधिकल्पनमस्तु । न च 'पद्मकोशप्रतीकाशमि'त्यादेः पूर्वानुवाकविहितोपासनासम्बन्धिहृदयपुण्डरीकसंस्पर्शात्तदपेक्षितगुणविधिपरत्वमवसीयत इति वाच्यम् । निवित्पदैस्सामिधेनीप्रकरणस्येव नारायणगुणगणकीर्तनपरैः अनन्वयिपदैः व्यवधानेन शिवोपासनाप्रकरणस्य विच्छिन्नतया निवित्पदान्तरितोपव्यानस्य सामिधेन्यङ्गत्वेनेव तदन्तरितस्य 'पद्मकोशे'त्यादिमन्त्रार्थस्य शिवोपासनाङ्गत्वेनान्वयासम्भवात् । न च जुह्वादीनामव्यभिचरितक्रतुसम्बन्धवद्दहरस्यापि अव्यभिचरितशैवदहरविद्यासम्बन्धोऽस्ति । येन प्रकरणाभावेऽपि जुह्वादिद्वारेण पर्णतादीनां क्रत्वन्वयवत् हृदयद्वारेण तद्धर्माणां वाक्यप्रमाणेन तदन्वयो भवेत् । तथासति 'शुक्रं प्रविध्य हृदयं प्रविध्य' इत्यादिमन्त्राणामपि हृदयद्वारेण विद्याङ्गत्वापत्त्या 'वेधाद्यर्थभेदादि'त्यधिकरणविरोधप्रसङ्गात् । तस्मात् पूर्वानुवाकस्य शिवोपासनाविधिपरत्वेऽपि पद्मकोशेत्यादेस्सन्निहितनारायणगुणगणकीर्तनसामर्थ्यकल्प्योपासनान्तर एवान्वयो युक्त इति । अथवा परोक्तरीत्या पूर्वानुवाकोऽपि नारायणोपासनाविधायितया तत्पर एव । ते खल्विदमाहुः—न तावत् 'यो देवानामि'तिमन्त्रश्शिवपरः । तत्र यो देवानामित्यादिना हिरण्यगर्भकारणत्वेनानुवादस्य 'नारायणात् ब्रह्मा जायत' इत्यादिपुरोवादानुसारेण नारायणविषयतया रुद्रपदस्यापि तत्रैव कथञ्चिद्वृत्तेः कल्पनीयत्वात् । नापि 'यद्वेदादावि'तिमन्त्रश्शिवपरः । तस्य ह्ययमर्थः—'प्रणवाद्या मुने वेदाः प्रणवे पर्यवस्थिताः' इति स्मृतेर्वेदानामुत्पत्तिलयस्थानतया तदाद्यन्तयोः प्रतिष्ठितो यस्स्वरः ओङ्कारः, तस्य 'अकारो वै सर्वा वागि'ति श्रवणात् सर्ववाक्प्रकृतितया स्वप्रकृतावकारे लीनस्याकारात्मतां प्राप्तस्य यः परो वाच्य इदंपरस्तत्पर इत्यादौ वाच्ये परपदप्रयोगदर्शनात् स महेश्वरः इत्थं सर्वशब्दजातप्रकृतिभूताकारवाच्यस्सर्वलोकानां महानीश्वर इति । एवंच सर्वशब्दजालप्रकृतितया निखिलवाचकोत्कृष्टाकारवाच्यस्य निखिलवाच्योत्कर्षो युक्त इत्यौचितीमवलम्ब्याकारवाच्यस्य सर्वेश्वरत्वप्रतिपादनपरोऽयं मन्त्रः 'अकारो विष्णुवाचक' इति स्मृतिदर्शनात् नारायणपरत्वप्रतिपादनपरः पर्यवस्यति । तस्मात् पूर्वापरमन्त्रयोः शङ्कि-

तात्पर्यार्थयोरपि नारायणपरत्वात् मध्ये उपासनाविधानं तद्विषयमेवेति निश्चीयते । अनन्तरं सहस्रशीर्षं देवमित्यादिमन्त्रजातस्य स्पष्टं तद्विषयत्वम् । तच्च सकलपरविद्योपास्यविशेषनिर्धारणार्थं, न तु प्रकृतदहरविद्यामात्रोपास्यविशेषस्पष्टीकरणार्थम् । तस्य तत्तद्विद्यासु जगत्कारणत्वजगदन्तरात्मत्वमुक्तप्राप्यत्वमुमुक्षूपास्यत्वादिना प्रतिपादितं वस्तु तत्तत्प्रकरणश्रुतैः परब्रह्मपरतत्त्वपरज्योतिःपरमात्माक्षरशिवशम्भ्वादिशब्दैः प्रत्यभिज्ञाप्य तस्य सर्वस्यापि वाक्यप्रमाणेन नारायणत्वविधिपरत्वात्, प्रकरणाच्च वाक्यस्य बलीयस्त्वात् । एवं सर्वपरविद्योपास्यनिर्धारणार्थस्य प्रकृतदहरविद्यासंस्पर्शोऽप्यस्तीति तदनन्तरं 'पद्मकोशप्रतीकाशमि'त्यादिना गुणविधानं देवतान्तराणामुपास्यनारायणविभूतित्वप्रतिपादनेन तस्य सर्वोत्कर्षख्यापनं चेत्येवमनुवाकद्वयमपि नारायणपरमिति तस्मात् सर्वथापि नारायणानुवाकशिवोपासनापर इत्ययुक्तमिति । तत्र तावदाद्यानुवाके नारायणोपासनाविधिरिति पराभिमानोन्मूलनं हृदि निधायाह—**तत्र दहरविद्यां विदधतीति** । अयमाशयः—न तावद्यो देवानामिति मन्त्रो नारायणपरः । अथर्वशिखायां शिवस्य ब्रह्मकारणत्वप्रतिपादनात् तदनुवादसम्भवे रुद्रपदस्यामुख्यार्थत्वकल्पनायोगात् तत्प्रतिपादनं क्वापि नास्तीत्यभिमानवतो 'यो देवानामि'त्यादेरनुवादत्वशङ्काया एव उत्थानानर्हत्वात् एतस्यैव मन्त्रस्य सदाशिवस्य ब्रह्मकारणत्वविधायित्वपर्यवसानात् । न हि प्रतीयमानार्थस्य प्राप्तिमन्त्रेण यदुपबन्धसहस्रेणापि शक्यते कल्पयितुमनुवादकत्वम् । नारायणस्य ब्रह्मकारणत्वं श्रुत्यन्तरे सिद्धमिति चेत्, न । अहो व्यधिकरणोत्तरकौशलमायुष्मतः । यच्छिवस्य ब्रह्मकारणत्वपरवचनस्य पुरोवादापेक्षायां नारायणस्य तत्कारणत्वश्रुतिमुपन्यस्यति । न हि यदाग्नेयवाक्ये यदुपबन्धेऽपि पुरोवादाभावादविधायकत्वोक्तौ सौर्यादिवाक्यमस्तीति प्रत्यवस्थानं शोभते । नारायणे रुद्रपदस्य लक्षणाभ्युपगमे न वैयधिकरण्यमिति चेन्न । अग्न्यादिशब्दानामपि यत्किञ्चिदर्थे लक्षणायां तत्प्रापकं यत्किञ्चित् प्रमाणं सम्भवतीति यदाग्नेयादिवाक्यानामप्यविधायकत्वप्रसङ्गात् अन्योन्याश्रयापाताच्च रुद्रशब्दस्य नारायणे लक्षणासिद्धौ वैयधिकरण्याभावात् 'नारायणात् ब्रह्मा जायत' इत्यादेः पुरोवादत्वसिद्धिः, तस्य च पुरोवादत्वसिद्धौ च तस्मिन् पुरोवादानुसारेण तस्य तत्र लक्षणेति । तस्मात् प्राप्त्यसम्भवे यदुपबन्धादीनां नानुवादलिङ्गत्वमिति न तद्बलादनुवादकत्वकल्पनं युक्तम् । यदि तु द्वयोर्हिरण्यगर्भकारणत्वं न सम्भवेत्, तदा श्रुतिविशेषश्रुतयोः रुद्रनारायणपदयोरन्यतरस्य लक्षणाया आवश्यकत्वात् यदुपबन्धानुग्रहाय 'नारायणात् ब्रह्मा जायत' इति श्रुत्यनुरोधाय यो देवानामित्यत्र रुद्रपदस्यैव लक्षणोच्यत इति शङ्क्येतापि । स-

म्भवति तु द्वयोरपि तत्कारणत्वं कल्पभेदेन इति प्रदर्शयिष्यामः । किंचैकस्मिन्नपि कल्पे तयोस्तत्कारणत्वं मातापितृभावेन सम्भवति । नारायणस्य शिवशक्तित्वव्यवस्थापनात् । तस्मात् सर्वथायं मन्त्रः शिवपर एव । अस्य चायमर्थः—महर्षिः महान् द्रष्टा 'यस्सर्वज्ञस्सर्ववित्' 'अशेषविषयामोघशुद्धिबुद्धिविजृम्भण' इत्यादिश्रुतिस्मृतिप्रतिपन्नाशेषविशेषविषयबोधसमृद्धः विश्वस्माच्चिदचिदात्मकप्रपञ्चादधिकः कृत्स्नस्य पशुपाशवर्गस्य नियन्तृत्वात् यो रुद्रः, स भक्तानां संसारदुःखस्य द्रावको देवः देवानां मध्ये प्रथमं हिरण्यगर्भं पुरस्तात् कल्पादौ स्वसंकल्पेन स्वस्मात् जायमानं करुणापरिपूर्णया सकलभुवनसृष्टिसामर्थ्यवितरणविचक्षणया आज्ञादृष्ट्या अपश्यत्, स देवोऽस्मान् शुभया परमानन्दप्राप्तिकारिण्या 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति श्रुतिप्रसिद्धया स्वविषयया स्मृत्या संयोजयत्विति । एवं ह्युपबृंहितं लैङ्गे—'अव्यक्तादभवत्स्थाणुश्शिवः परमकारणम् । सत्कार्यकारणोपेतः ऋषिर्विश्वाधिकः प्रभुः । देवानां प्रथमं देवं जायमानं मुखाम्बुजात् । ददर्श चाग्रे ब्रह्माणं चाज्ञया तमवैक्षत । दृष्टो रुद्रेण देवेशस्ससर्ज सकलं जगत् ॥' इति । कौर्मे च—'हिरण्यगर्भो जगदन्तरात्मन् त्वत्तो हि जातः पुरुषः पुराणः । स जायमानो भवता नियुक्तो यथाविधानं सकलं ससर्ज ॥' इति । एतेनास्य मन्त्रस्य [illegible]परत्वं स्वीकृत्य यदवैदिकानामन्यथाव्याख्यानं—महर्षिर्योगबलेन कालत्रयवृत्तान्तसाक्षात्कारसमर्थो रुद्रस्स्वाविर्भावात्प्रागेव नारायणात् जातं हिरण्यगर्भं जायमानावस्थाविशिष्टं योगबलात् साक्षादकृतेति, तदपि गलहस्तितम् । श्वेताश्वतरे—'हिरण्यगर्भं जनयामास पूर्वमि'त्येवास्य मन्त्रस्य पाठदर्शनाच्च । एवं चैतदनुरोधेन 'यस्मात्परमित्यनन्तरमन्त्रोऽपि शिवपर इति स्पष्टमेव । अत एवाश्वलायनस्मरणं—'यस्मात्परतरं नास्ति नापरं च परात्मनः । न ज्यायोऽस्ति न चाणीयो नमस्तस्मै स्वयम्भुवे । येनेदमखिलं पूर्णं यन्मया मूर्तयस्स्मृताः । तस्मै शिवाय महते नमस्सूक्ष्माक्षरात्मने ॥' इति । यच्च यद्वेदादाविति मन्त्रस्य नारायणपरत्वमुत्प्रेक्षितं, तदप्ययुक्तम् । परमते शब्दानां भूतपञ्चकगुणत्वेन तन्मतेऽपि तेषामन्योन्यमुपादानोपादेयभावायोगात् प्रकृतिवाच्यत्वाविवक्षायां तस्य या प्रकृतिः, तस्या यः पर इति वक्तव्यत्वेन 'तस्य प्रकृतिलीनस्य यः पर' इति शब्दायोगाच्च कथञ्चित्तदुभययोगेऽपि अकारस्य प्रणवप्रकृतित्वे मानाभावाच्चान'न्वकारो वै सर्वा वागि'ति श्रुत्याकारस्य सर्ववाङ्मयप्रकृतित्वं प्रतिपद्यामहे । तत एव तस्य प्रणवप्रकृतित्वमपि सिध्यति । न चैवम् 'ओङ्कारेण सर्वा वाक् सन्तृण्णे'त्यपि श्रवणाद्वैपरीत्यं शङ्क्यम् । अकारस्य प्रणव इव तस्याकारे अनुगमादर्शनेन तस्यास्स्तुतिपरत्वकल्पनादिति चेन्न । 'मात्रामात्राः प्रतिमात्राः कृत्वे'ति श्रुतौ अकारोकारम-

काराद्यर्धमात्राणामुत्तरोत्तरस्य पूर्वपूर्वलयस्थानत्वविभावनेनार्धमात्राया एव त्रिमात्रप्रकृतित्वस्फुटीकरणात् अप्रकृतौ लयासम्भवात् 'अकारो वै सर्वा वागि'ति श्रुतेः 'अग्निः सर्वा देवता' इतिवत् स्तुतिपरत्वेनाप्युपपत्तेः। भागवते—'समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः। हृदाकाशादभून्नाद'इति नादरूपामर्धमात्रां प्रस्तुत्य 'ततो हऽभूत्त्रिवृदोङ्कार' इति तस्याः प्रणवप्रकृतित्वस्य कण्ठरवेणाभिधानाच्च। तस्मादस्य मन्त्रस्य पररीत्यार्थकल्पनेऽपि योऽर्धमात्रावाच्यः, स महेश्वर इत्यर्थः पर्यवस्यति। अर्धमात्रावाच्यश्शिव एवेति स्पष्टीकृतः। अथर्वशिखाविचारे यदि प्रणवप्रकृतिरकारः, तथापि 'अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्कणे रण' इति कोशकारैरनेकार्थानुशासनात् अकारवाच्यस्य महेश्वरत्वाभिधानं विष्णावेकान्तेन न पर्यवस्यति। ननु, प्रणवप्रकृतिवाच्यस्य महेश्वरत्वविधानमिहेत्युक्तं, तत्प्रकृतिश्च प्रथममात्रारूपोऽकारः। तथा च प्रणवप्रथममात्रारूपेणाकारेण यस्याभिधानं, तस्य ग्रहणे न सामान्यतोऽकारमात्रवाच्येष्वतिप्रसङ्ग इति चेन्न। तथासत्यथर्वशिखोत्तरतापनीयादिश्रुतिषु स्मृतिपुराणागमेषु ब्रह्मणस्तद्वाच्यत्वप्रतिपादनेन तस्यैवेह[1] ग्रहणापत्तेः। अपि च 'चमसवदविशेषादि'तिसूत्रोक्तरीत्या अजामन्त्रन्यायेनानेकधा योजयितुं शक्यानां मन्त्राणां प्रकरणोपबृंहणादिभिरैदम्पर्यमास्थेयम्। अन्यथार्थव्यवस्थित्यसिद्धेः। शक्यते ह्यस्य मन्त्रस्य विधान्तरेणाप्यर्थोत्प्रेक्षणम्। 'अग्निमीळे पुरोहितं' 'योनिस्समुद्रो बन्धु समानं परमि'त्येतेषु श्रुतानामकारोकारमकाराणां वेदादिमध्यान्तवर्णत्वप्रसिद्धेः अकारो वेदादौ प्रोक्तस्स्वरः, स एव तदन्ते प्रतिष्ठितः 'समानं परमि'त्यत्र उपान्त्यः। ततः परं स्वराभावेन तस्यैवान्त्यस्वरत्वात्, 'तस्य प्रकृतिलीनस्य' प्रकृतिर्विष्णुः, 'वासुदेवः परा प्रकृतिरि'ति श्रुतेः, 'प्रकृतिस्त्वं पुमान् रुद्र' इत्यादिस्मृतेश्च। तस्मिन् लीनस्य वाच्यवाचकभावेनाभेदं प्राप्तस्य 'वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचिदि'ति वायूक्तेः, तस्य यः परः वेदाद्यन्तपाठगमितार्भ्यर्हितभावस्याकारवाच्यस्य प्रकृतिरूपस्य विष्णोः यः परः प्रधानभूतः 'प्रकृतिस्त्वं पुमान् रुद्र' इत्यादिवचनसिद्धो रुद्रः, 'ततस्तदालोकनतत्पराणामि'त्यादौ परशब्दस्य प्रधाने प्रयोगात् शब्दविषयः, तत्परव्यवहारेऽपि शब्दप्रतिपाद्यस्य प्राधान्यात् प्रधानवाचित्वेनैव परपदप्रयोगोपपत्तौ वाच्ये पृथक्छक्तिकल्पनायोगात् स महेश्वरः स रुद्रो महानीश्वर इति। अथवाऽस्य मन्त्रस्य यजुर्वेदपठितत्वात् वेदो यजुर्वेदस्तस्यादौ पठितस्स्वर इकारः 'इषेत्वे'ति, स एव तदन्तेऽपि प्रतिष्ठितः 'एव तपती'ति, तस्य प्रकृतिर्लक्ष्मीः, 'तत्र श्रीरभवद्देवी'त्युपक्रम्य 'मूलप्रकृतिरव्यये'ति कौर्मे प्रयोगात्। तस्यां

१. तस्य वेह इति पाठान्तरम्॥

वाच्यवाचकभावेन लग्नस्य ईकारस्य लक्ष्मीनामत्वात् दैर्घ्यावस्थां प्राप्तस्येति यावत्, तस्य यः परः पञ्चमीविषये षष्ठी, तस्माद्यः परः उत्तरो वर्ण उकारः स महेश्वरः, तद्वाच्यशिवस्सर्वेश्वर इति । तस्मात् स्वतन्त्रोत्प्रेक्षणे अर्थस्य व्यवस्थित्यसिद्धेः ऐदंपर्यावधारणाय प्रकरणादिकमुपन्यसनीयम् । प्रकरणं च शिवराघवसंवादे त्रिपुण्ड्रधारणाङ्गभस्मसम्पादने शैवे कर्मणि विनियुक्तेन 'धातुः प्रसादान्महिमानमीशमि'ति शिवनामाङ्कितेन 'अणोरणीयानि'ति मन्त्रेण उपक्रमात् मध्ये 'यो देवानामि'ति मन्त्राम्नानाच्च शिवविषयमवसीयते। 'यः परस्स महेश्वर' इत्यत्र महेश्वरशब्दस्य च रूढिप्राबल्यात् अनूदितस्य परस्य स्ववाच्यशिवरूपताविधौ तात्पर्यं निश्चीयते। अतो निश्चितविधेयानुरोधेनैवानेकधा योजयितुं शक्यस्यास्यानुवादभागस्य योजनमुचितम् । 'यस्योभावग्नी अनुगतौ अभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यत्र हविरार्त्यधिकरणन्यायेनाग्निद्वित्वस्याविवक्षया एकैकाग्न्यनुगमस्यापि पुनराधेयनिमित्ततयानुवादप्रतीतेः व्यवस्थितत्वेऽपि अग्निद्वयोत्पादकतया वाक्यान्तरावगताधानाभ्यासरूपस्य विधेयस्य पुनराधेयस्य एकाग्निमात्रोत्पादनाक्षमतया विधेयानुरोधेनानुवादभागेऽग्निद्वित्वविवक्षायाः 'पुनराधेयमोदनवदि'त्यधिकरणे निर्णीतत्वेनाव्यवस्थितानुवाद्यार्थप्रतीतिस्थले विधेयानुरोधेनानुवाद्यार्थवर्णनौचित्यस्य कैमुतिकन्यायसिद्धत्वादिति सर्वथा परमशिववैभवपर एवायं मन्त्रः । अक्षरार्थोऽप्यस्य—'यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः । वेदैकवेद्यं याथार्थ्याद्वेदान्ते च प्रतिष्ठितम् । स एव प्रकृतौ लीनो भोक्ता यः प्राकृतो मतः । तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः । तदधीनप्रवृत्तित्वात् प्रकृतेः पुरुषस्य च ।' इति वायुसंहितायां श्रवणादुपबृंहणानुरोधेन वेदादौ यः स्वरः प्रोक्तः प्रणवः प्रतिपाद्यप्रतिपादकयोरभेदोपचारात् लक्षणया तत्प्रतिपाद्यं निर्विशेषं ब्रह्म, तदेव वेदान्ते च प्रतिष्ठितं, वेदान्तभागप्रतिपाद्यत्वात् । तस्य प्रकृतावविद्याख्यायां प्रतिबिम्बभावेन लग्नस्य प्रकृतिसहितस्य पुरुषस्य यः परः नियन्तृत्वेन प्रधानभूतः 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादिश्रुतिप्रसिद्धः, स महेश्वरशब्दितः श्रीसदाशिव एव, न देवतान्तरमिति स्वीकार्यः । एवं चोपक्रमोपसंहारपरामर्शैश्शिवपरत्वेन निर्णीते 'अणोरणीयानि'त्यनुवाके विधीयमाना दहरविद्या शिवदेवत्येति न तत्रोपास्यतया देवतान्तरान्वयावकाशः इति । अपि च कैवल्याद्युपनिषदाम्नातगुणनिकरप्रत्यभिज्ञानादप्यस्यास्तदेकविषयत्वमवसीयते। तथा हि—स्पष्टं तावदुपासनास्थानसाम्यं तथोपास्यरूपमपि तत्र 'उमासहायमि'त्यादिना प्रतिपादितम्। इहापि तथैवोपवर्णितम्—'ऋतं सत्यमि'ति मन्त्रेण। विरूपाक्षकृष्णपिङ्गलपदयोः त्रिलोचनोमासहायपदसमानार्थत्वात् 'अधोलिकमवस्था

धेमस्थ्युत्पलदलस्रजम् । अर्धपुङ्क्षणं वन्दे पुरुषं कृष्णपिङ्गलमि'ति भविष्यत्पुराणवचनेन कृष्णपिङ्गलशब्दस्य उमाशाबल्यपरत्वेन विवरणात् विरूपाक्षविश्वरूपश्रुतिभ्यां 'नमस्कुर्यान्महादेवमृतं सत्यमितीश्वर'मिति कौर्मे शिवनमस्कारे विनियोगविधानात् बोधायनसूत्रे—'अथातो महादेवस्य पादोदकविधिं व्याख्यास्याम' इत्युपक्रम्य ऋतं सत्यमिति मन्त्रेण प्राशयेदिति शिवपादोदकप्राशने विनियोगाच्च शिवपरत्वेन निश्चितेऽस्मिन्मन्त्रे श्रुतस्य तथैव विवरणस्य न्याय्यत्वाच्च । यत्तु कश्चिदनाघ्रातशब्दार्थव्युत्पत्तिगन्धः स्वकल्पितकदध्वानुरोधिश्रुतिस्मृतिवचनकल्पनाकुलितनिखिलवैदिकमर्यादस्सकलजनापहास्यनिजमरुद्वतारत्वोद्घोषणतदर्थकश्रुतिस्मृत्युदाहरणविख्यापितविप्रलिप्सोत्कर्षविरचितान्ध्यः प्रललाप—'ऋतं सत्यं परं ब्रह्मेत्याद्युद्देश्याद्वितीयका: विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरा । तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः । ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेदि'ति, तदेतत् मन्त्रतात्पर्यकथनमाबालमखिलापहास्यं निराकरणाभिनिवेशनमपि वक्तारमिव विफलीकुर्यादित्युपेक्ष्यते । ऊर्ध्वरेता इत्यत्र तु ऊर्ध्वज्वलनात्मककृशानुरेतस्त्वोक्तिः । न चास्य मन्त्रस्य शिववैभवपरत्वेऽपि दहरोपासनायामुपास्यरूपसमर्पणपरत्वे न मानमिति वाच्यम् । तस्यामपेक्षितोपास्यरूपसमर्पणक्षमस्याकाङ्क्षानुरोधेनान्वयस्यावश्यम्भावात्, योगयाज्ञवल्क्ये ध्यानाध्याये—'अथवा परमात्मानं परमानन्दविग्रहम् । गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम् । ब्रह्म ब्रह्मपुरे गार्गि दहराब्जसमध्यमे । अभ्यासात् सम्प्रपश्यन्ति सन्तस्त्वं च तथा कुर्वि'ति तथैव दर्शितत्वाच्च । तदेवं प्रत्यभिज्ञाविशेषैरन्यैरपीति समुच्चयार्थेनापिशब्देन द्योतितैः, अन्यैः हृदयकमलसंस्थानविशेषादिभिः । नन्वेवं कथं मध्ये नारायणपरमन्त्राणां सङ्गतिरित्याशङ्क्याह—**अनुध्यानार्थमिति** । अयं भावः—न तत्र तावत्परोक्तरीत्या तेषां सर्वविद्योपास्यनिर्धारणपरत्वम् । सहस्रशीर्षं देवमित्यादिभिः द्वितीयान्तपदैर्नारायणमनूद्य 'तद्विश्वमुपजीवती'ति तेषामेकवाक्यतया तस्य विश्वोपजीव्यत्वप्रतिपादनपरत्वं स्वरसतः प्रतीयमानं परित्यज्य द्वितीयानां प्रथमार्थत्वकल्पनस्य प्रत्युद्देश्यं विधिपर्यवसानेनानेकवाक्यत्वकल्पनस्य चायुक्तत्वात् परोक्तरीत्या सर्वो वै रुद्र इत्यादिवाक्यानां स्पष्टभेदानां विरुद्धविभक्तितत्साकाङ्क्षक्रियासमभिव्याहारादिप्रतिबन्धकरहितानां सर्वपुरुषसदादिशब्दैश्शाण्डिल्यविद्यापुरुषसूक्तविद्यासद्विद्याव्याहृतिविद्यादिसकलपरविद्योपास्यप्रत्यभिज्ञापनपूर्वकं तस्य रुद्ररूपत्वनिर्धारणपरताया दुर्निवारत्वेन अथर्वशिखायां च कश्च ध्येय इति विद्याविशेषक्रमोपक्रमाभावात् सकलपरविद्यासु ध्येयप्रश्ने शिवस्य ध्येयत्वनिर्धारणस्य स्पष्टत्वेन च सहस्रशीर्षं देवमित्यादिमन्त्राणां क्लिष्टकल्प्यतद्विरुद्धार्थपरत्वशङ्काया उत्थानानर्हत्वा-

च । नापि प्रकृतदहरविद्योपास्यनिर्धारणपरत्वम् । सन्निहितमन्त्राभ्यामेव रुद्रमहेश्वरशब्दितशिवरूपतया तन्निर्धारणस्य 'ऋतं सत्य'मिति मन्त्रेण तदुचितरूपसमर्पणस्य च सिद्धत्वात् । नापि 'ब्रह्मज्येष्ठा वीर्या सम्भृतानी'त्यादिमन्त्राणामिव गुणकीर्तनसामर्थ्यकल्प्योपासनान्तरपरत्वम् । प्रकृतदहरविद्यानङ्गभूतस्वतन्त्रनारायणोपासनापरत्वकल्पने समनन्तरानुवाकसमाप्तिपर्यन्तमनुवर्तमाने तत्प्रकरणे अनन्वयेन तत उत्कर्षकल्पनापत्तेः, प्रकरणे सम्भवति तत्कल्पनायोगात् । अङ्गत्वमपि दहरविद्यां प्रति नारायणध्यानस्याग्नेयादियागान् प्रति प्रयाजादियागानामिवाराढुपकारकत्वरूपं न युक्तम् । 'पद्मकोशप्रतीकाशमि'त्यादिना 'तस्य मध्ये महानग्नि'रित्यादिना 'तस्य मध्ये वह्निशिखे'त्यादिना च हृदयकमलमहाग्नितच्छिखागुणकीर्तनसामर्थ्यलभ्यानां तद्ध्यानानां हृदयकमलकुहरविलसन्महावह्निशिखामध्यवर्तित्वेन शिवोपासनानुकूलतया सन्निपातित्ववन्नारायणान्तरत्वेन पूर्वानुवाकविहितसन्निध्याम्नातक्रममुक्तिफलान्वितशिवोपासनानुकूलतया संनिपातित्वोपपत्तौ आराढुपकारकत्वकल्पनायोगात् । कौर्मे श्रीमदीश्वरगीतासु—'चिन्तयित्वा तु पूर्वोक्तं हृदये पद्ममुत्तमम् । आत्मानमथ कर्तारं तत्रानलसमप्रभम् । मध्ये वह्निशिखाकारं पुरुषं पञ्चविंशकम् । चिन्तयेत् परमात्मानं तन्मध्ये गगनं परम् । ओङ्कारबोधितं तत्त्वं शाश्वतं शिवमच्युतम् । अव्यक्तं प्रकृतौ लीनं परं ज्योतिरनुत्तमम् ॥ तमसः परमं तत्त्वमात्माधारं निरञ्जनम् । ध्यायीत तन्मयो नित्यमेकरूपं महेश्वरम् ॥' इति प्रथमं स्वस्थाने हृदयकमलस्य तन्मध्ये मूलश्रुतावग्नित्वेन निरूपितस्य कर्तृत्वादिविशिष्टस्य विज्ञानमयकोशस्वरूपस्य अहंकारस्य तन्मध्ये निष्कृष्टचैतन्यैकतानस्यानन्दमयकोशरूपस्य तत्र वह्निशिखात्वेन निरूपितपञ्चविंशस्य तन्मध्ये सहस्रशीर्षं देवमित्यादिनोपवर्णितस्य तस्याश्शिखाया इत्यादिना शिखामध्यवर्तित्वेनोपादिष्टस्य नारायणस्य तदन्तः 'यः परः स महेश्वर' इत्युक्तस्य शिवस्योपासनमिति उपासनाप्रकारविशेषस्फुटीकरणाच्च, तस्मिन्नेव यतिधर्मप्रकरणे—'सन्न्यस्याहि विशेषेण चिन्तयेन्नित्यमीश्वरमि'त्युपक्रम्य 'कृत्वा हृत्पद्मनिलये विष्ण्वाख्यं विश्व(श)सम्भव'मित्यादिना हृदयकमले विष्णोर्भावनां विधाय' तदन्तस्सर्वभूतानामीश्वरं ब्रह्मरूपिणमि'त्यादिना 'पुराणं पुरुषं शम्भुं ध्यायन्मुच्येत बन्धनादि'त्यन्तेन तदान्तरत्वेन शिवोपासनाविधानस्य दृष्टत्वाच्च । तस्माद्यथान्तरादित्यविद्यायां 'आदित्यो वा एष एतन्मण्डलं तपती'त्यादिना मण्डलाभिमानिपुरुषकीर्तनं तदान्तरत्वेन परमेश्वरस्योपासनाविधानार्थमेव दहरविद्यायामपि नारायणकीर्तनमिति न किञ्चिदसाङ्गत्यम् । अन्ये तु 'स ब्रह्मा स शिव'इत्यादिकैवल्यश्रुतिप्रत्यभिज्ञानुरोधात् 'तस्याश्शिखाया मध्ये पर-

मात्मा ऽव्यवस्थित' इत्यादिना प्रागुपास्यत्वेनोपदिष्टपरमेश्वरपरमेवेति मन्यमाना मध्यमानुवाके प्रथमं नारायणस्य गुणकीर्तनम्, अनन्तरं हृदयकमलस्य, ततो महाग्नेः, ततस्तच्छिखायाः, ततः प्रागुपास्यत्वेन विहितस्य परमात्मन इति क्रमदर्शनात् प्रथमं नारायणात्मना स्वात्मानमनुसन्धाय स्वस्य हृदम्बुजे वैश्वानराग्निशिखामध्यवर्तित्वेन ध्यातव्यः परमशिव इति ध्यानप्रकारं मन्यन्ते । एवं च 'स ब्रह्मा स शिव' इत्यादेः परमशिवविभूत्युपदेशपरत्वे स्थिते कैवल्यश्रुताविव विभूतिषु नारायणस्यापरिगणनमुपासककोटिनिवेशादेव तस्य तदुपसर्जनत्वस्य स्पष्टत्वादिति चाहुः । अयमपि प्रकारः सम्मतः पौराणिकानाम् । तथाह्युपबृंहितं सूतसंहितायाम्—'अथवाहं हरिस्साक्षात्सर्वज्ञः पुरुषोत्तमः ॥ सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् ॥ विश्वो नारायणो देवो ह्यक्षरः परमः प्रभुः ॥ इति ध्यात्वा पुनस्स्वस्य हृदयाम्भोजमध्यमे ॥ प्राणायामैर्विकासते परमेश्वरमन्दिरे ॥ अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते । ज्ञाननाले महाकन्दे प्रणवेन प्रबोधिते । विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतोमुखम् । वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ॥ तापयन्तं स्वकं देहमापादतलमस्तकम् ॥ निवातदीपवत्तस्मिन् दीपितं हव्यवाहनम् । नीलतोयदमध्यस्थविद्युल्लेखेव भास्वरम् । नीवारशूकवद्रूपं पीताभासं विचिन्तयेत् । तस्य वह्निशिखायास्तु मध्ये परमकारणम् । परमात्मानमानन्दं परमाकाशमीश्वरम् । ऋतं सत्यं परं ब्रह्म परं[1] संसारभेषजम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महेश्वरम् । नीलग्रीवं स्वमात्मानं पश्यन्तं पापनाशनम् । ब्रह्मविष्णुमहेशानैर्ध्येयं ध्येयविवर्जितम् । सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ॥' इति । एवं च नारायणस्य यद्युपासककोटिनिवेशनं श्रुत्या विवक्षितं, यदि वा उपासकस्य हृदये तस्याप्यान्तरत्वेन शिवस्यानुध्यानम्, उभयथापि तस्माच्च स्वविभूतित्वेन तद्विभूतित्वेन वोपदिष्टेभ्यो ब्रह्मादिभ्यश्च परमशिवोत्कर्षस्सिध्यतीति तस्यैव सर्वोत्कर्ष इति निष्प्रत्यूहम् । ननु चात्रैव 'नारायणपरं ब्रह्मे'ति कण्ठोक्त्या परब्रह्मभावेनोपदिष्टस्य नारायणस्य कथमन्योपसर्जनभावः कथ्यते । नैष दोषः । 'नारायणपरमि'त्यस्य समासपदत्वेन तत्त्वं ब्रह्म नारायणात् परं ज्यायः, नारायणस्तु परः तदन्य इति अत्रैव 'ऋतं सत्यं परं ब्रह्मे' त्युपास्यत्वेन निर्दिष्टस्य परब्रह्मणशिवस्य नारायणस्य च विवक्षितप्रधानोपसर्जनभावोपपादनपरतयैव तन्मन्त्रव्याख्यानोपपत्तेः । यत्त्वत्र परैरुक्तं—महोपनिषदि समानप्रकरणे 'नारायणः परं ब्रह्मे'ति पदविच्छेदेनाध्ययनदर्शनात्तदनुरोधादिहापि भिन्नपदस्य नारायणेत्यस्य 'सुपां सुलुगि'त्यादिना प्रथमाविभक्तेर्लुगादेशस्य कल्पनीयत्वात् समस्तपदत्वेऽपि निषादस्थपत्यधिकरणन्यायेन सामानाधिकरण्यस्यैवोचितत्वात् 'अहमेव परं ब्रह्म परं तत्त्वं पितामह ।

1. साम्बम् इति पाठान्तरम् ॥

अहमेव परं ज्योतिः परमात्मा त्वहं विभुः ।' इति लैङ्गे उपबृंहणदर्शनाच्च नारायणस्यैव परब्रह्मभावप्रतिपादनपरोऽयं मन्त्र इति, तदयुक्तम् । महोपनिषदि एवम्मन्त्राम्नानस्यैव तावत् सम्प्रदायक्रमागतेषु पाठेष्वनुपलम्भात्, तत्र तत्सत्त्वेऽपि नारायणानुवाकपाठानुरोधेन महोपनिषत्पाठ एव 'सुपां सुलुगि'त्यादिना पञ्चम्यास्स्वादेशकल्पनोपपत्तौ प्रकरणादिव्लारस्यभङ्गायोगात् समर्थपरिभाषाविरोधेन समानाधिकरणसमासस्याप्यसङ्गतत्वात् लक्षणविरुद्धात् कर्मधारयात् तदनुरोधिनः पञ्चमीतत्पुरुषस्याभ्यर्हितत्वात् 'तपरस्तत्कालस्ये'ति सूत्रे तपरसमासदर्शनेन तद्वत् पञ्चमीति योगविभागात् इहापि समासोपपत्त्या अत्र पञ्चमीसमासस्य लक्षणानुरोधित्वात् त्वत्पक्षेऽस्मिन् मन्त्रे मध्यमपरशब्दयोः पुल्लिङ्गयोस्तत्त्वंज्योतिर्विशेषणत्वस्याप्यन्याय्यत्वात् । 'अहमेव परं ब्रह्मे'त्यादिलैङ्गश्रुतनारायणवचनस्य महालिङ्गप्रादुर्भावात् पूर्वं ब्रह्मनारायणयोः परस्परोत्कर्षविवादप्रस्तावे पठितस्यानन्तरं तद्विवादप्रशमनार्थोद्भूतमहालिङ्गमध्यसन्निहितस्य शिवस्य 'पश्यतं मां महादेवं भयं सर्वं प्रमुच्यताम् । युवां प्रसूतौ गात्राभ्यां मम पूर्वं महाबलौ ॥ त्रिधा भिन्नोऽस्म्यहं विष्णो ब्रह्मविष्णुशिवाख्यया ॥ सर्गरक्षालयगुणैः निष्कलः परमेश्वरः । सम्मोहं त्यज विष्णो त्वम्, इत्यादिभिर्वचनैस्तत्रैवापोदितस्यार्थतथात्वाव्यवस्थापकत्वात् तादृशापवादरहितेन 'स परस्सर्वशक्तीनां ब्रह्मणस्समनन्तरः ॥' इति नारायणं प्रकृत्य विष्णुपुराणवचनेन तस्य ब्रह्मपरत्वस्यैवोपबृंहितत्वाच्च परोक्तार्थग्रहणेऽपि 'नारायणपरं ब्रह्म' 'ऋतं सत्यं परं ब्रह्मे'ति द्वयोः परभावोपदेशासम्भवेन आवश्यके कस्यचिदन्यथानयने अङ्गगुणविरोधाधिकरणन्यायेन गुणभूतस्य नारायणस्यैव परभावोपदेशस्य 'ब्रह्मोच्यते परमसौ परमं च तत्त्वमि'ति श्लोकेन सुदर्शनाचार्यैरुपदिष्टया रीत्यान्यथानेतव्यत्वेन तद्बलादुपक्रमादिप्रतिष्ठापितार्थव्याकुलीकरणायोगाच्च । 'अङ्गगुणविरोधे च तादर्थ्यादि'त्यधिकरणे हि एकाहादिदीक्षापक्षेषु दीक्षणीयासोमयागयोरन्यतरस्यासम्भवात् यदिष्ट्यादिवाक्यप्राप्तपर्वकालत्वस्यावश्यके त्यागे प्रधानानुग्रहस्योचितत्वात् दीक्षणीयाया एव तत्त्याग इति निर्णीतम् । तस्मान्न कश्चिदुपपादितेऽर्थे विरोधगन्धः । वस्तुतस्तु 'नारायणपरं ब्रह्मे'त्यादेर्नारायणस्यानुपचरितब्रह्मभावप्रतिपादनपरत्वेऽपि तस्य शिवोपसर्जनभावस्संघटत इति पुरस्तान्निपुणतरमुपपादयिष्यते ॥ ३१ ॥

किं च श्रुतीनां मूर्धानश्शुभद बृहदारण्यकमुखाः
प्रभावं हार्दस्य प्रणिजगदुरन्येऽपि भवतः ।
गुणानां बोद्धारस्सकलमुपसंहारनियमं
विदुस्त्वय्येवैषां हृदयमिति किं मूढवचनैः ॥ ३२ ॥

बृहदारण्यकश्रुतिस्तावत् 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति दहरविद्योपास्यं हार्दं परमेश्वरमुपक्रम्य 'सर्वस्य वशी सर्वस्येशानस्सर्वाधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये'ति तस्यानन्यसाधारणं प्रभावमवर्णयत्। तथा छान्दोग्यश्रुतिरपि 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश' इत्युपक्रम्य 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प' इति तद्गुणकीर्तनेन 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादिना तदुपासकानां महाफलकीर्तनेन च तस्य महिमानं प्राकाशयत्। तथा 'अथातो महोपनिषदमेवे'त्युपक्रम्य महोपनिषदपि नारायणानुवाकप्रक्रियया 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवमि'त्यादिना उपासकतादात्म्येनानुसन्धेयं नारायणं तस्य हृदयकमलं तत्र वैश्वानराग्निशिखां च वर्णयित्वा 'तस्यै शिखायै मध्ये पुरुषः परमात्मा व्यवस्थित' इति हार्दस्य शिवस्य तन्मध्यवर्तित्वप्रदर्शनेन 'स ब्रह्मा स ईशान' इत्यादिना इतरेषां तद्विभूतित्वख्यापनेन च तस्य वैभवं व्यद्योतयत्। यद्यपि नारायणानुवाके 'तस्याश्शिखाया मध्य' इत्यादेः नारायणविषयत्वपक्षे तत्प्रत्यभिज्ञानुरोधादिह 'तस्यै शिखायै मध्य' इत्यादेस्तद्विषयत्वादियमुपनिषन्नारायणोपासनापरैवेति क्वचित् कर्मण्युपसर्जनत्वेन यष्टव्याया देवतायाः कर्मान्तरे प्रधानत्वेन यष्टव्यत्ववद्दहरोपासनायामुपसर्जनत्वेन ध्यातव्यस्य हृदयपुण्डरीकस्य पातञ्जलशास्त्रोक्तफलविशेषार्थं प्राधान्येन ध्यातव्यत्ववच्च शैवदहरोपासनायामुपसर्जनत्वेनोपास्यस्य नारायणस्यैतद्बलात् प्राधान्येनोपास्यत्वं लभ्यते, तथापि 'तस्याश्शिखाया मध्य इत्यादि शिवपरमि'ति सूतसंहिताद्यभिमतपक्षे तद्बलादियमप्युपनिषत् शिवोपासनापरैव पर्यवस्यति। एवमन्या अपि श्रुतयो यथासम्भवं द्रष्टव्याः। स्यादेतत्। बृहदारण्यके निर्विशेषप्रकरणे तस्यैव स्तुत्यर्थं वशित्वादयो धर्मास्समाम्नाताः। न तत्र कैवल्यशाखादिश्रुतदहरविद्योपास्यस्य शिवस्य कश्चित् प्रसङ्गोऽस्ति। छान्दोग्ये यद्यप्युपासनाविधानमस्ति, तथपि तत्र शिवोपासनमिति न किञ्चित् प्रमाणमुपलभ्यते। न च कैवल्यशाखादिश्रुतोपासनैक्यात् तथात्वसिद्धिः। आत्मप्रबोधोपनिषदि 'अथ यदिदं ब्रह्मपुरमिदं पुण्डरीकमि'त्यारभ्य 'शोकमोहविनिर्मुक्तं विष्णुं ध्यायन्न सीदती'त्यन्तेन दहरपुण्डरीके विष्णूपासनस्यापि विहितत्वेन तदैक्यस्यैव नियन्तुमशक्यत्वात्। यत्तु महोपनिषन्मन्त्रजातमुदाहृतं, तत्र नारायणानुवाक इव पूर्वं शिवप्रस्तावाभावान्न तदुपासनापरत्वं शक्यते वक्तुम्। 'एको ह वै

नारायण आसी'दित्युपक्रममारभ्य नाराशणस्य प्रस्तावेन तदुपासनापरत्वस्यैव प्रतीतेः । न च नारायणानुवाकप्रक्रियाप्रत्यभिज्ञानात् शिवोपासनापरत्वम् । 'एको ह वै नारायण आसी'दित्याद्युपक्रमविरोधेनानन्तरं तत्प्रत्यभिज्ञानस्य च्छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युपक्रमानुरोधेन उद्गीथभक्त्यवयवविषयायामुद्गीथविद्यायां वाजसनेयकश्रुतकृत्स्नोद्गीथभक्तिकर्तृविषयोद्गीथविद्यार्थवादादिप्रत्यभिज्ञानस्येवाकिञ्चित्करत्वात् एतत्प्रक्रियाप्रत्यभिज्ञानात् तस्यैव नारायणोपासनापरत्वमिति वैपरीत्यस्यैव पराभिमतत्वाच्चेत्याशङ्क्याह—गुणानामिति । अयमाशयः—बृहदारण्यके वशित्वाम्नानं यद्यपि निर्गुणप्रकरणमध्यपाति, तथापि निर्विशेषे वशित्वाद्यभावात् सगुणोपाधिविशेषगतगुणकीर्तनद्वारैव स्तुतौ पर्यवसानस्य वक्तव्यत्वात् हृदयकोशमध्यगतस्य ईशानसर्वेश्वरभूताधिपतिशब्दितस्य शिवस्यैव गुणकीर्तनस्य स्तुतिद्वारत्वेन प्रतीतेः शिवविषयमेव वशित्वादिगुणाम्नानम् । तथा छान्दोग्ये 'दहरोऽस्मिन्नन्तराकाश' इति दहराधिकरणोक्तन्यायात् ब्रह्मपरेणाकाशपदेनोपास्यं ब्रह्म प्रस्तुत्य 'तस्मिन्यदन्तस्तदन्वेष्टव्यमि'त्याद्युक्त्वा 'किं तदत्र विद्यते,यदन्वेष्टव्यमि'त्यादिना स्वयमेव परिचोद्य 'अस्मिन् कामास्समाहिता' इति तदुत्तरवाक्येन तदन्तर्वर्तित्वेनोपदिष्टानां सत्यकामादिगुणानां तैत्तिरीयोपनिषदि तत्रापि 'दहं गगनं विशोक' इति विशोकत्वगुणान्वयस्वारस्यसिद्धब्रह्मतात्पर्येण गगनपदेन पूर्वापरमन्त्रसमर्पितशिवरूपमुपास्यं ब्रह्म प्रकृत्य 'तस्मिन्यदन्तस्तदुपासितव्यमि'ति छान्दोग्यरीत्या तदन्तर्वर्तित्वेनोपदेशात् छान्दोग्ये सत्यकामादिगुणोपदेशः, तद्विशिष्टब्रह्मोपासनाविधानं चेत्युभयमपि शिवपरमेव । 'कामादीतरत्र तत्र चे'त्याद्यधिकरणं छान्दोग्याम्नातानां सत्यकामादिगुणानां बृहदारण्यके वशित्वादिगुणैस्सहोपसंहारस्य सर्वैरभ्युपगतत्वाच्च । तथा महोपनिषदि 'सहस्रशीर्षं देवमि'त्याद्याम्नानमपि शिवोपासनाप्रकारविशेषपरम् । कार्त्स्न्येन नारायणानुवाकप्रक्रियाप्रत्यभिज्ञानात् । यत्त्वत्रोपक्रमविरोध इति शङ्कितं, तत्र पृच्छामः, किमुपक्रमे नारायणस्योपासना विहितेति तद्विरोधः,उत तद्विभूत्युपन्यासात् तदुपासनाविधिरत्रोन्नीतेति,अथवा उपक्रमे सर्वोत्कर्षेणोपवर्णितत्वादन्योपसर्जनतयोपासनानुप्रवेशकल्पनमयुक्तमिति विरोधः । न तावदाद्यः । महोपनिषदुपासनाविधेरेवाश्रवणात् । नापि द्वितीयः । नारायणानुवाकप्रत्यभिज्ञया नारायणान्तरत्वेनैव शिवोपासनाप्राप्तेः नारायणस्याप्युपासनाविषयकोटावनुप्रवेशेन तत्प्रत्यभिज्ञादरेऽप्युपक्रमविरोधाभावेन तदादरस्य युक्तत्वात् । छान्दोग्ये 'तस्मिन्यदन्तस्तदन्वेष्टव्यमि'त्युपक्रमे सत्यकामादिगुणमात्रोपासनाप्रतीतावप्यविरोधात् 'अथ य इह आत्मानमि'त्युपसंहारानुरोधेन तद्विशिष्टब्रह्मोपासनाभ्युपगमान्नारायणोपनिषदि 'तस्मिन्यद

न्तस्तदुपासितव्यमि'ति गुणमात्रोपासनाप्रतीतावपि छान्दोग्यप्रत्यभिज्ञानुरोधात् गुणो-पसर्जनकगुण्युपासनाभ्युपगमाच्च छान्दोग्यश्रुतोद्गीथविद्याया वाजसनीयकोद्गीथविद्याप्रत्यभिज्ञाने तु प्राणदृष्ट्योद्गीथकर्तुरुपासनायां कथञ्चिद्विशेषणत्वेन उद्गीथावयवस्योङ्कारस्यानुप्रवेशसम्भवेऽपि 'अथ य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिर' इत्यादिच्छान्दोग्यश्रुतिप्रतिपन्नं तस्य प्राणदृष्ट्योपासनं विरुध्येते'ति युक्तो भेदः। नन्वस्तु तर्हि तृतीयः कल्पः । 'तस्मिन्यदन्तस्तदन्वेष्टव्यं, तस्मिन्यदन्तस्तदुपासितव्यमि'त्यनयोरुपसंहारानुरोधेन यत्तत्पदयोः 'त्यदादीनि सर्वैर्नित्यं' 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामि'ति विधानादाकाशतद्गतगुणजातोभयपरत्वं परिकल्प्य तदुभयोपासनाविधिपरत्वस्य वर्णयितुं शक्यत्वात् 'एको ह वै नारायण आसीदि'त्यादिना नारायणस्य सर्वोत्कर्षप्रतिपादनस्यान्योपसर्जनत्वकल्पनासहिष्णुत्वाच्चेति चेत्, न। 'एको हवा' इत्यादेरिशिवोपसर्जनत्वकल्पनानुकूलत्वेनैवाग्रे निपुणतरं व्याख्यास्यमानत्वात्। एतेन महोपनिषदनुरोधेन नारायणानुवाक एव नारायणोपासनामात्रपर इति पराभिमानो गलहस्तितः । तथासत्येकोपासनाश्रुत्यनुरोधेन उभयोपासनाश्रुतेः नयने छान्दोग्यश्रुतेरपि तैत्तिरीयश्रुत्यनुरोधेन गुणमात्रोपासनापरत्वापत्तेः । तस्मात् बृहदारण्यकाद्युदाहृतश्रुतयो दहरविद्यान्वयिगुणादिकथनेन शिवस्य निरतिशयं प्रभावं ख्यापयन्तीति साधूक्तम् ॥३२॥

किं च विधत्ते माण्डूक्यश्रुतिरपि समस्ताधिपतितां
समानार्थश्रुत्यन्तरविवृतभावा तव विभो ।
तथेशानो मन्त्रः स्मरमथन रुद्रोपनिषदि
प्रतीता मन्त्राश्च प्रकटतरमन्ये च बहवः ॥३३॥

अत्रेयं विषयशुद्धिः—अधिदैवतमध्यात्मं चात्मनो निर्विशेषस्योपाधिभिर्विभक्तानि त्रीणि सन्ति रूपाणि, वैश्वानरश्च हिरण्यगर्भश्च ईश्वरश्चेत्यधिदैवतं, विश्वश्च तैजसः प्राज्ञ इत्यध्यात्ममि'ति श्रुतिः । देहयोः स्थूलरूपयोस्तत्र व्यष्टिसमष्ट्योर्द्वावभिमानविधायिनौ विश्ववैश्वानराविष्टौ। सूक्ष्मयोस्तु प्रकथितौ तैजसाभिधहिरण्यगर्भौ प्राज्ञेश्वरावुपहितावुक्तौ । अज्ञानमायाभ्यां विश्वो जाग्रदवस्थायां जीवस्स्वप्ने स्यात्तैजसः अविद्यामात्रसाक्षित्वात् सम्प्रसादे प्राज्ञो भवेत् । वैश्वानरोऽत्र भगवान् विराट्पुरुष उच्यते ॥ शरीरं यस्य निखिलं त्रैलोक्यं सचराचरम् । हिरण्यगर्भो जगतां सूक्ष्मसृष्टेर्विवर्धिता । यदुपाधेः प्राणकल्पं सूत्रं वेदविदो जगुः। विशुद्धसत्त्वविलसन्मायाधिष्ठानरसिकः ईश्वरस्त्वेष भगवानम्बिकार्धाङ्गरुचिरः मायाविद्योपाधिभेदा-

१. सूत्रमाहुर्वेदविदः इति पाठान्तरम् ॥

वप्रकरण्यैवात्र केचिदविद्यया जीवमाहुः प्रतिबिम्बं, बिम्बमीशम् । एतत्सर्वं शास्त्रोदितं व्यक्तं तच्छिक्षाशालिनाम्। तस्मादस्मिन् मूलस्थिता गिरोऽस्माभिर्नोदाहृताः । तत्र विश्ववैश्वानरौ तैजसहिरण्यगर्भौ प्राज्ञेश्वरौ च स्थूलसूक्ष्मसूक्ष्मतरत्वोपाधिभिरेकीकृत्य तेषां पादत्रयत्वं शुद्धस्य तुरीयपादत्वं च सम्पाद्य पूर्वपूर्वपादप्रविलापनेन तुरीयप्रतिपत्तिसौकर्याय 'सोऽयमात्मा चतुष्पादि'त्यादिना चतुष्पादमात्मानं निरूपयन्ती माण्डूक्यश्रुतिः 'जागरितस्थान' इत्यादिना पादद्वयनिरूपणानन्तरं 'सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पाद' इति तृतीयपादनिरूपणावसरे 'एष सर्वेश्वर एष सर्वज्ञः एषोऽन्तर्यामी एष योनिस्सर्वस्य प्रभवाप्ययौ हि भूतानामि'ति तस्य सर्वाधिपत्यं विदधाति । ननु, यद्यपि प्राज्ञस्य स्वतस्सर्वेश्वरत्वाद्यसम्भवात् तस्य तत्प्रतिपादनं मायोपहितेन ब्रह्मणा तस्यैक्यविवक्षां गमयति , तथापि तस्य देवतान्तररूपत्वस्यापि सम्भवात् नैषा श्रुतिरीश्वरपरेति नियन्तुं शक्यत इति मन्दशङ्कानिराकरणायाह—**समानार्थेति** । उत्तरतापनीये माण्डूक्यप्रक्रिययैव 'सोऽयमात्मा चतुष्पादि'त्यादिना चतुष्पादमात्मानं निरूपयन्त्या 'प्राज्ञ ईश्वरस्तृतीयः पाद एष सर्वेश्वर' इत्यादिना तृतीयपादनिरूपणे प्राज्ञस्यैवेश्वरैक्यमुक्त्वैव सर्वेश्वरत्वाद्याम्नानात् तदेकार्थाया माण्डूक्यश्रुतेरपि तथैव भाव उन्नीयत इत्यर्थः । 'ईशानस्सर्वविद्यानामि'त्यादीशानो मन्त्रः । 'रुद्रोपनिषत् शतरुद्रीयम्,'एकशतं यजुश्शाखाः,तासु सर्वासु रुद्रोपनिषदाम्नायत' इति चरणव्यूहे प्रयोगात् । तदाम्नाता 'नमो हिरण्यबाहव' इत्यारभ्य एकविंशतिमन्त्राः । ते हि शिवस्य दिगाद्येकैकाधिपत्योपन्यासमुखेन सर्वाधिपत्यं स्फुटयन्ति । अन्ये मन्त्राः आयुष्यसूक्तशिवसङ्कल्पादिपठिताः ॥३३॥

किं च **अनन्यप्राप्यं ते कमपि महिमानं प्रकटय-**
**न्त्यसङ्ख्येया मन्त्रा निरवधिनमस्कारघटिताः ।**
**स्वयं शूद्रादीनामपि शिव पतन्तश्चरणयोः**
**नमस्कारे भारं न विदधति मूर्खा न तु बुधाः ॥३४॥**

**चतुष्टयेऽपि वेदानां चन्द्रशेखरगोचराः । मन्त्राः प्रायेण दृश्यन्ते तन्नमस्कारशेखराः ॥ द्विरुक्तैस्सकृदाम्नातैराद्यन्तपठितैरपि । अलंकृता नमस्कारैरसङ्ख्यास्त इति स्फुटम् । अन्येषां विबुधानां तु मन्त्राश्श्रुतिषु विश्रुताः । क्वचित् क्वचित् नमस्कारयोगेऽपि न तथाविधाः ॥** तथा च स्वविषयोत्कर्षलिङ्गनमस्कारबाहुल्येनानितरदेवतासाधारणेन त्वरितरुद्राथर्वशिरोरुद्राध्यायदेवव्रताद्यपिशिवस्यानन्यसामान्यं महिमानं ख्यापयन्तीति स्पष्टमेतत् । य-

त्वत्र परैः प्रलपितं—नमस्कारो न स्वविषयोत्कर्षे लिङ्गम् । कुतश्चित् स्वहिंसासक्तात् भयादपि तन्नमस्कारस्यापि लोके दर्शनात् वेदेऽपि 'नमस्ते अस्तु मा मा हिंसी'रिति भयप्रयुक्तनमस्कारोपलम्भाच्च । इह तु तद्भूयस्त्वं भयभूयस्त्वादुपपन्नमिति, तन्निरासमभिप्रेत्याह—**स्वयमिति** । अयं भावः—**यदीह भयभूयस्त्वाद्भूयस्त्वं नमसामिदम् । तदेवानन्यसामान्यं ब्रह्मतां गमयेद्विभोः ॥ महत् भयं वज्रमिति कठवल्लीषु दर्शनात् ॥ कम्पनादिति सूत्रे च तस्य तल्लिङ्गतेरणात् ॥ भयादपि नमस्कारो नैवोत्कर्षं विना श्रुतौ । शूद्रवन्दनवल्लोके को वा नास्ति व्यतिक्रमः** ॥ न हि 'नमस्ते अस्तु मामा हिंसीरि'ति नमस्कारस्य भयप्रयुक्तत्वेऽपि ततस्तद्विषयस्योत्कर्षासिद्धिः । 'नमस्ते हरसे शोचिष' इति मन्त्रश्रुतनमस्कारस्य तत्तुल्यरूपस्यैव 'नमस्ते हरसे शोचिष इत्याह ।' 'नमस्कृत्य हि वसीयांसमुपचरन्ती'ति तन्मन्त्रब्राह्मणेन औत्सर्गिकस्वविषयोत्कर्षप्रयुक्तत्वात्यागोक्तेः । किं च 'सर्वो वै रुद्र' इत्यादिमन्त्रेषु भयलिङ्गरहितेषु केवलं शिवस्य सार्वात्म्यादिप्रतिपादनायैव प्रवृत्तेषु निबध्यमाना नमस्कारा विषयगौरवैकप्रयुक्ता इति न तत्र काचिदन्यथासिद्धिः वक्तुं शक्यते । उक्तं च लैङ्गे—'सर्वं रुद्रेति वै प्राहुर्मुनयस्तत्त्वदर्शिनः । नमस्कारेण सहिता गौरवात् परमेष्ठिन' इति । तस्मादनन्यसामान्यानेकनमस्कारमालालंकृतास्त्वरितरुद्रादयो निरङ्कुशं शिवस्य निरतिशयं महिमानमावेदयन्तीति वज्रलेपायते । अतो लोकवेदविद्विष्टदुर्मतप्रविष्टवृषलादिचरणनिपतनापतननिजनैच्यनिह्नवार्थैव परं परेषां नमस्कारो नोत्कर्षप्रयुक्त इति प्रलापः । नासौ विदुषां हृदयङ्गम इति ॥२४॥

> **किं च नमस्यानामेकं विषयमखिलानां च वचसां**
> **महाविष्ण्वादीनामपि जनयितारं दिविषदाम् ।**
> **वदन्तस्त्वामन्ये वरद तव शंसन्ति विभवं**
> **गुरूकुर्वन्तस्ते गिरिश गणनाथानपि भृशम् ॥२५॥**

'यस्मै नमस्तस्मै त्वा जुष्टन्नियुनज्मी'तिमन्त्रस्तावच्छिवस्य सर्वनमस्कारविषयत्वं दर्शयति । स्वस्योद्देश्यकनमस्कारविषयत्वस्य सर्वसाधारणत्वेन तेनासाधारणशिवस्वरूपसमर्पणायोगेन तस्य सर्वनमस्कारविषयत्वपरत्वावश्यम्भावात् । न च नमस्कारभूमविषयत्वे तस्य तात्पर्यमस्तु, तस्य रुद्राध्यायादिमन्त्राणां नमस्कारभूम्नां शिवासाधारणत्वेन तत्स्वरूपसमर्पणक्षमत्वात् सर्वनमस्कारविषयत्वस्य शिवे प्रमाणान्तरादनवगमेन तेन रूपेण तदनुवादायोगाच्चेति वाच्यम् । देवतान्तरनमस्कारेभ्यो बाहुल्यरूपस्य शिवनमस्काराणां भूम्नोऽत्र प्रतिपादकस्य शब्द

स्याभावात् नमश्शब्दस्यैव तत्तात्पर्यकल्पने लक्षणापत्तेः । सर्वनमोविषयत्वस्य नमश्शब्देन जात्याख्याबलात् 'यस्मा एव नम' इति 'सर्वं वाक्यं सावधारणमि'ति सामान्यव्युत्पत्तिसिद्धोत्रितस्थलान्वयावधारणबलाद्वा सिद्ध्युपपत्तेः तस्य शिवे श्रुत्यन्तरादनवगमेऽपि 'यो ब्रह्माणमि'ति मन्त्रे परमेश्वरस्याध्यापयितृत्ववदनुवादसामर्थ्यादेव सिद्धिसम्भवात् दहरविद्यान्वयिपरमेश्वरगुणप्रतिपादनपरे 'ऋतं सत्यमि'ति मन्त्रे 'विश्वरूपाय वै नम' इति भागस्यापि सर्वनमस्कारशेषित्वलक्षणतदन्वयितद्गुणविशेषपरत्वौचित्येन पुरोवादस्यापि सम्भवाच्च । एवं 'यस्मै नमस्तच्छिर' इत्यादिकमपि अलेदाहार्यम् । तथा 'इमा रुद्राय स्थिरधन्वने गिर' इतिमन्त्रः कृत्स्नस्यापि शब्दराशेः प्रतिपाद्यं शिवं दर्शयति । तदनन्तरपठितरुद्रसूक्तान्तर्गतमन्त्रगिरां शिवपरत्वस्य स्पष्टत्वेनानुपदर्शनतया इमा इतीदंशब्दस्य प्रत्यक्षादिमन्निधापितकृत्स्नशब्दपरत्वात् । यद्यपि 'नमो ब्रह्मणे नमो ब्राह्मणेभ्य' इत्यादयोऽन्यविषया अपि नमस्काराः, सर्वशब्दप्रतिपाद्यत्वव्यपदेशाश्च उपलभ्यन्ते, तथापि 'तद्य इमे वीणायां गायन्त्येतं ते गायन्ती'ति सवितृमण्डलमध्यवर्तिनः पुरुषस्य लौकिकेष्वपि गानेषु गीयमानत्वव्यपदेशवत् सर्वनमस्कारविषयत्वसर्वशब्दजालप्रतिपाद्यत्वव्यपदेशः परमेश्वरस्य सार्वात्म्याभिप्राय इति 'यस्मै नम' इत्यादयस्सर्वात्मत्वाविष्करणेन तस्य परब्रह्मभावं[1] प्रतिपादयन्तीति भावो द्रष्टव्यः । 'कानिचिद्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः । रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥ पर्यवस्यन्ति विप्रेन्द्रास्तथा वाक्यानि कानिचित् । विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् ॥ आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् । सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानिचित् । एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः । प्रतिपाद्यो महादेवः स्थितस्सर्वासु मूर्तिषु ।' इत्यादिस्कान्दोक्तिदर्शनात् । 'स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसादिदिष्टने'ति मन्त्रबलेनान्यविषयत्वेन प्रतीयमानानामपि स्तुतिनमस्काराणामन्तर्यामिणि शिवे पर्यवसानकल्पनात् 'श्वभ्यः श्वपतिभ्यश्च वो नम' इत्यादीनां तत्पर्यवसानकल्पनावश्यम्भावाच्च 'यस्मै नम' इत्यादिकं सर्वान्तर्यामित्वाभिप्रायकमिति केचिदाचार्याः । तथा 'सोमः पवत' इति मन्त्रो महाविष्णवादीनामपि देवानां जनकमीश्वरं प्रतिपादयति । 'जनितोत विष्णोरि'त्युतपदेन 'जनिताग्नेरि'त्याद्युक्तार्थेभ्य उत्कर्षद्योतनेन विष्णुपदस्य जगत्पालके महाविष्णौ तात्पर्यात् तदवतारजनकत्वस्य दशरथादावपि सत्त्वेनाग्न्यादिजनकत्वात्तस्य उत्कर्षाभावात् 'एकः पुरस्ताद्य इदं बभूव यतोबभूव भुवनस्य गोपाः । यम-

---

१. परभावं प्रकटयन्तीति पाठान्तरम् ॥

प्येति भुवनं सांपराय' इति आयुष्यसूक्तमन्त्रे शिवस्य जगत्कारणत्वतत्पालकत्वतत्संहर्तृत्वप्रतिपादनपरे 'यतो बभूव भुवनस्य गोपा' इत्यस्य जगत्पालनस्वातन्त्र्यस्फोरणाय सत्त्वोपाधिकमहाविष्णुमूर्तिजनकत्वपरत्वावश्यम्भावाच्च, 'त्वं मतीनां दिवः पृथिव्या वह्नेस्सूर्यस्य वज्रिणः । साक्षादपि महाविष्णोस्सोमो जनयितेश्वरः ॥' इति रुद्रसंहितायामुपबृंहणाच्च। नन्वयं मन्त्रः पवमानविषयः, सत्यं, तथापि तत्राग्न्यादिकारणत्वस्य वस्तुतः प्रतिपाद्यत्वेनान्वयायोगात् उपबृंहणाच्च तदेकशब्दे उमासहित एवान्वयः । एतच्च पुरुषसूक्तार्थविचारे निरूपितप्रायम् । न चैवंसति मन्त्रस्थसोमपदस्य सखण्डत्वापत्त्या पदाध्ययनसंप्रदायविरोधः । विनियोगार्थलतापरत्वस्यापि सत्त्वेन तद्विषयतया पदाध्ययनोपपत्तेः, 'उमया सहितश्शम्भुस्सोम इत्युच्यते बुधैः । स एव जनकस्साक्षात्तद्विष्णोरपि च श्रुतिः ॥' इत्यादिलैङ्गपुराणवचनदर्शितेन योगेन शिवपरत्वस्याप्यावश्यकत्वाच्च। तथा देवव्रतरुद्राध्यायादयश्शिवस्य पार्षदानपि नितरां स्तुतिनमस्कारादिभिः बहूकुर्वन्तस्तस्यापरिमितं महिमानं ख्यापयन्ति । एषां पदं 'द्वितीयं जप्त्वा गाणापत्यमवाप्नोति तृतीयं जप्त्वा देवमेवानुप्रविशति ।' 'गीतिज्ञो यदि योगेन न गच्छेत्परमं पदम् ; रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥' इत्यादिश्रुतिस्मृतिभिरपवर्गस्य नेदिष्ठत्वेनावगमितम् । 'एक एव रुद्रो न द्वितीयाय तस्थ' इत्यादयोऽपि मन्त्राश्शिववैभवपरा उदाहर्तव्याः । यत्तु कर्मविशेषे एक एव रुद्रो देवता, न त्वनेक इति तद्व्याख्यानं, तदयुक्तम् । श्वेताश्वतरोपनिषदि विनापि कर्मप्रसङ्गम् 'एक एव रुद्रो न द्वितीयाय तस्थुः, य इमान् लोकानीशत ईशिनीभि'रिति श्रवणात् । तस्मादेक एव रुद्र इति 'एकमेवाद्वितीय'मित्यनेन समानार्थकम् ॥ ३९ ॥

इति शिवतत्त्वविवेके श्रुत्यर्थविचारः ॥

इति पूर्वभागस्समाप्तः

ओम्

अथ

# उत्तरभागः

उपबृंहणार्थविचारः

**एवं वेदान्तभागे च कर्मकाण्डे च कानिचित् । उदाहृतानि वाक्यानि वै भवे पार्वतीपतेः ॥ अथ तत्र पुराणानि शिवशास्त्रोत्तमानि च । भारतादीनि चान्यानि प्रमाणमिति कथ्यते—**

**असङ्ख्याभिश्शाखावितितिभिरुपन्यस्तमखिलं**
**सुसूक्ष्माभिर्न्यायावलिभिरवसेयं च भवतः ।**
**प्रभावं निष्कृष्य स्फुटमिह पुराणानि बहुधा**
**कपर्दिन्नावालं करबदरकल्पं विदधते ॥ ३ ॥**

श्रीशिवपुराणे तावत्—'मुनीनां षट्कुलीनानां ब्रुवतामितरेतरम् । इदं परमिदं नेति विवादस्सुमहानभूत् । परस्य दुर्निरूपत्वात् जातस्तत्र न निश्चयः ॥' इत्युपक्रम्य तेषामृषीणामन्योन्यं विवदमानानां ब्रह्मसमीपसर्पणमुक्त्वा 'भगवन्नन्धकारेण महता वयमावृताः । खिन्ना विवदमानाश्च न पश्यामोऽत्र यत्परम् ।' इत्यादिना तेषां सामान्येन सकलकारणभूतस्य परदैवतस्य प्रश्नमुत्थाप्य 'एवं पृष्टस्तदा ब्रह्मे'त्यारभ्य 'उत्थाय सुचिरं ध्यात्वा रुद्र इत्युच्चरन् गिरम् । आनन्दक्लिन्नसर्वाङ्गः कृताञ्जलिरभाषत ॥ यस्मात् सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैस्सर्वैः प्रथमं सम्प्रसूयते ॥' इत्यादिना ब्रह्मवाक्येनानितरसाधारणावाङ्मनसगोचरानेकशाखाविप्रकीर्णबहुविधवैभवनिष्कर्षपरेण प्रपञ्चेन शिव एव परदेवतेति व्यवस्थापितम् ।

**एतं प्रदेशमखिलश्रुतिराशिसीमसारार्थसङ्ग्रहपरं द्रुहिणोपदेशम् । अध्यापितास्सुकृतिनो न गलत्यमीषां जन्मान्तरेऽपि परदैवतधीर्महेशे ॥** तथा पाद्मे—'श्रुतानि सर्वशास्त्राणि पुराणान्यखिलान्यपि । धर्मशास्त्राणि सर्वज्ञ त्वत्तस्सूत महामते ॥ अस्माकं संशयः कश्चित् सुमहान् हृदि वर्तते । येनान्धा इव सञ्जातास्छेत्तुं तं च त्वमर्हसि ॥ को देवः परमो ज्ञेयः कथं चाराध्यते हि सः । आराधिते फलं किं स्यादेतत्सर्वं ब्रवीहि नः ॥' इति श्रुतचरानेकपुराणादिप्रदेशेषु नानादेवतोत्कर्षप्रतिपादनानां किं तत्त्वविवक्षया प्रवृत्तं, किं च श्रोतृबुद्ध्यनुसारादिति स्वयं निर्धारयितुमशक्नुवतामृषीणां प्रश्नमुपन्यस्य 'अत्र वः कथयिष्यामि इतिहासं पुरातनम् । विष्णोस्सनत्कुमारस्य संवादं पापनाशनम् ॥ इममेव पुरा प्रश्नं पृष्टवान् वि-

ष्णुमव्ययम् । सनत्कुमारो भगवान् परापरविभागकृत् । मुनेस्तस्य वचः श्रुत्वा विष्णुस्सर्वविदांवरः ॥ यदुवाच महाभागास्तच्छृणुध्वमतन्द्रिताः ।' इति सूतस्य प्रतिवचनं चोपक्षिप्य 'एक एव शिवो ज्यायान् द्विधा च बहुधा श्रुतः । वेदेषु च पुराणेषु साङ्गोपाङ्गेषु गीयते ॥' इत्यादिना विष्णुवचनेन शिवस्य सर्वोत्कर्षप्रतिपादनेन 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि पञ्चैव ज्ञेयश्चैको महेश्वरः ॥' इत्यादिना सर्वशास्त्राणां शिवे पर्यवसानप्रकारस्य शास्त्राणां प्रस्थानभेदप्रवृत्तिप्रयोजनस्य च उपपादनेन 'सर्वाकारो निराकारो महात्मा पार्वतीपतिः । तस्मात्परतरं नास्ति ज्ञानज्ञेयात्सदाशिवः ।' इत्यादिना तस्मात् परभावव्यवस्थापनेन 'एवं विलपतोऽत्युच्चैर्ये शृण्वन्ति न मे वचः । सन्धुक्ष्यन्ते मुनिश्रेष्ठ तदर्थं नरकाग्नयः ।' इति कृतोपदेशेऽनादरे प्रत्यवायवर्णनेन च दृढीकृतोऽयमर्थः । ब्रह्माण्डपुराणे च—'पुरा पितामहं देवं मेरुशृङ्गे महर्षयः । प्रोचुः प्रणम्य देवेशं किमेकं तत्त्वमव्ययम् ।' इति तावत्प्रश्नेनोपक्रम्य 'स मायया महेशस्य मोहितो लोकसम्भवः । अविज्ञाय परं भावं स्वात्मानं प्राह चर्षिणाम् ।' इत्यादिना ब्रह्मणः स्वस्य परभावोपदेशं तमाकर्ण्यासहमानस्य यज्ञात्मनो नारायणस्य स्वस्य परभावप्रतिपादनं चावतार्य 'एवं विवदतोर्मोहात्परस्परजयैषिणोः । आजग्मुस्तत्र तौ देवौ वेदाश्चत्वार एव च ॥ अन्वीक्ष्य देवं ब्रह्माणं यज्ञात्मानं च संस्थितम् । प्रोचुस्संविग्नहृदया याथार्थ्यं परमेष्ठिनः । ऋग्वेदः—'यस्यान्तस्स्थानि भूतानि यस्मात्सर्वं प्रवर्तते । यदाहुस्तत्परं तत्त्वं स देवः स्यान्महेश्वरः ॥' यजुर्वेदः—'यो यज्ञैरखिलैरीशो योगेन च समर्च्यते । यमाहुरीश्वरं देवं स देवस्स्यात्पिनाकधृत् ॥' श्रीसामवेदः—'येनेदं भ्राम्यते चक्रं यदाकाशान्तरं महत् । योगिभिर्विद्यते तत्त्वं महादेवस्स शङ्करः ॥' अथर्ववेदः—'यं प्रपश्यन्ति देवेशं यतन्तो यतयः परम् । महेशं पुरुषं रुद्रं स देवो भगवान् भवः । एवं स भगवान् ब्रह्मा स्वात्मानमीरितं शुभम् । श्रुत्वा विहस्य विश्वात्मा यज्ञश्चापि विमोहितः । कथं तत् परमं ब्रह्म सर्वसङ्गविवर्जितम् । रमते भार्यया सार्धं प्रमथैश्चातिगर्वितैः । इतीरितोऽथ भगवान् प्रणवात्मा सनातनः ॥ अमूर्तो मूर्तिमान् भूत्वा वचः प्राह पितामहम् ।' प्रणवः—'न ह्येष भगवान् पत्न्या स्वात्मनोऽव्यतिरिक्तया । कदाचिद्रमते रुद्रस्तादृशोऽपि महेश्वरः । अयं स भगवानीशस्स्वयंज्योतिस्सनातनः । स्वानन्दभूता कल्पिता देवी नागन्तुकी शिवा ।' इति वेदानां सप्रणवानामुपदेशेन तमप्यविगणय्य स्वतनयस्य ब्रह्मणः तत्कालाविर्भूतसंहाररुद्रकारितपञ्चमशिरोलवनानन्तरमग्निसवितृबिम्बाविर्भूतस्य साक्षात्परमशिवस्योपदेशेन च तस्य परभावः स्पष्टीकृतः । कौर्मे च कालकर्मनोक्तैतदर्थोपवर्णनेन बहुधा शिवोत्कर्षव्यवस्थापनानन्तरं व्या-

सगीतान्ते 'इत्येष मानवो धर्मो युष्माकं कथितो मया । महेशाराधनार्थाय ज्ञानयोगश्च शाश्वतः । अनेन विधिना युक्तो ज्ञानयोगं समाचरेत् । स पश्यति महादेवं नान्यः कल्पशतैरपि । स्थापयेद्यः परं धर्मं ज्ञानं तत्पारमेश्वरम् । न तस्मादधिको लोके स योगी परमो मतः । यस्संस्थापयितुं शक्तो न कुर्यान्मोहितो जनः । स योगयुक्तोऽपि पुनर्नात्यर्थं भगवत्प्रियः ॥' इति शिवोत्कर्षस्य व्यवस्थापनीयत्वविधानेन च स्पष्टीकृतोऽयमर्थः । आदित्यपुराणे च वर्णाश्रमधर्मविवेचने—'विश्वेश्वरमुमाकान्तं विश्वान्तर्यामिणं शिवम् ॥ न ब्रह्माद्यैस्समं ब्रूयाच्छक्तिभिश्चापि पार्वतीम् । ब्रूयाद्यदि समं शम्भुं ब्रह्मविष्ण्वादिभिस्सुरैः । यः कश्चित्तमसाविष्टः कदाचिन्नैव तं स्पृशेत् । सर्वस्मादधिकं ब्रूयात् भगवन्तमुमापतिम् ॥' इत्यादिना शिवस्येतरसाम्योक्तिनिषेधेन तदाधिक्यप्रतिपादनविधानेन चावेदितस्तदुत्कर्षः ॥ स्कान्दे च 'ये मां ब्रह्मादिभिस्तुल्यं ये त्वां लक्ष्म्यादिशक्तिभिः । गुरुं ये प्राकृतैस्तुल्यं संस्मरन्त्यल्पबुद्धयः । तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् ॥' इतीतरदेवतासाम्यस्मरणे प्रायश्चित्तोपदेशेन तदुत्कर्षः विभावितः । एवं सर्वेष्वपि पुराणेषु मायोपहितस्य परब्रह्मणस्तुरीयस्य परमशिवस्योत्कर्षः प्रतिपादितः विद्वद्भिरालोचनीयः । तस्य क्वचिदपि निकर्षोक्तिशङ्काभावात् क्वचित् क्वचित् द्रुहिणान्नारायणाद्वा निकर्षविभावनस्य संहाररुद्रतदवतारविशेषनीललोहितादिविभूतिविषयत्वात् । वाराहभागवतवैष्णवगारुडादिष्वंशेभ्य एव खलु केवलमन्तकारेः ॥ विष्णोर्विधातुरपि सन्त्यधिकत्ववादास्साक्षान्न तु क्वचन साम्बशिवात्तुरीयात् ॥ अनुपदं चैतत्प्रपञ्चयिष्यामः ॥३६॥

इति पुराणानां शिवपरत्वनिरूपणम् ।

---



प्रभावं ते भीम प्रकटतरमावेदयति नः
प्रभूणामाद्यानां प्रथम भगवन् भारतमपि ।
मुकुन्दं यत्र त्वच्चरणनलिनाराधनपरं
भवन्तं च ब्रह्माच्युतहरपरं नाथ शृणुमः ॥३७॥

महाभारते बहुषु स्थलेषु शिवाराधनपरत्वं नारायणस्य प्रतिपादितम् । उदाहृतं च नवमश्लोकविवरणे । तच्च सर्वं तेन परब्रह्ममूर्त्यन्तररूपेण शिवस्य स्वाराध्यत्वेन स्वस्यापि मूलभूतत्वख्यापनाय सर्वाराध्यत्वख्यापनाय वा लोकानुग्रहार्थमादिमूर्त्या देवमानुषावतारविशेषैश्च नित्यत्वबुद्ध्या तत्तत्फलोद्देशेन च शिवाराधनमनुष्ठीयत इत्येतत्परं सत् शिवस्य विश्वाधिकत्वविश्वाराध्यत्वप्रतिपादने पर्यवस्यतीति वक्तव्यम् । महर्षेर्बहुशस्तन्निबन्धनप्रयासस्य प्रयोजनान्तरादर्शनात् । लैङ्गेऽपि 'सर्वे विष्णुमया देवास्सर्वे

विष्णुमया गणाः । न हि विष्णुसमा काचित् गतिरन्या विधीयते । इत्येवं सततं वेदा गायन्ते नात्र संशयः । स एव भगवान् देवस्तव लिङ्गार्चने रतः । तव प्रणामैकरतः कथं देवो ह्यभूत् प्रभो । ' इति पृष्टवन्तं पितामहं प्रति 'भवान्नारायणश्चैव शक्रस्साक्षात् सुरेश्वरः । मुनयश्च सदा लिङ्गं संपूज्य विधिपूर्वकम् । स्वंस्वं पदमनुप्राप्तास्तस्मात् सम्पूजयन्ति ते ।' इति शिववचनात् 'ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केनवा । लिङ्गाराधनमुत्सृज्य क्रियते स्वपदस्थितिः ।' इत्यादिशिवपुराणादिवचनाच्च नारायणस्य परब्रह्ममूर्त्यन्तरतया कर्मासम्पादनीयनिरतिशयैश्वर्यवत्त्वेन तदीयशिवाराधनस्य स्वपदस्थित्यर्थत्वायोगात् अर्थवादमात्रत्वात् अवतारैस्त्वदाराधनेन तव ख्यातिं सम्पादयिष्यामीति विष्णुना रुद्राय वरो दत्त इति वाराहे प्रतिपादनात् स्वदत्तवरपरिपालनाय तस्य कृष्णाद्यवताररूपैः परं तदाराधनमिति परेषां तदन्यथासिद्धिवचनस्य च 'ततोऽन्वपश्यत् गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् । स्तुवन्तमीशं बहुभिर्वचोभिश्शंखासिचक्रार्पितहस्तमाद्यम् ।' इति कृष्णतपश्चर्यायां शिवप्रत्यक्षीकरणसमये विष्णोरादिमूर्त्यापि शिवाराधनपरत्वप्रदर्शनात् वाराहवचनस्यापि वस्तुसदुत्कर्षख्यापनार्थं विष्णोश्शिवाराधनमित्येतत्परत्वोपपत्तेः तत्र वरदानकीर्तनस्यापि वक्ष्यमाणन्यायेन पाशुपत्यवरदानकीर्तनवदन्यथासिद्धिसम्भवाच्च अयुक्तत्वात् तामसजनव्यामोहनार्थं तस्य शिवाराधनमिति मूर्खप्रलापस्य च सर्वप्रमाणविरुद्धस्य निराकरणानर्हत्वात् कृष्णस्य नित्यं शिवलिङ्गार्चनं निरीक्ष्य 'कस्समाराध्यते देवो भवता कर्मभिश्शुभैः । ब्रूहि त्वं कर्मभिः पूज्यो योगिनां ध्येय एव चे'ति कृतप्रश्नं मार्कण्डेयं प्रति 'भवता कथितं सर्वं तथ्यमेव न संशयः । तथापि देवमीशानं पूजयामि सनातनम् ।' इत्यादिना 'न वै पश्यन्ति तं देवं मोहिता मम मायया । ततोऽहं स्वात्मनो मूलं ज्ञापयन् पूजयामि तम् ॥' इत्यन्तेन कौर्मपठितकृष्णवचनेन तदीयशिवाराधनस्य स्वस्यापि मूलभूततया शिवस्य विश्वाधिकत्वज्ञापनार्थत्वस्य मोक्षधर्मे 'यद्यहं नार्चयेयं तमीश्वरं वरदं शिवम् । आत्मानं नार्चयेत् कश्चिदिति मे भावितं मनः । मया प्रमाणं हि कृतं लोकस्तदनुवर्तते ॥ न हि देयोऽस्ति कश्चिन्मे वरः पाण्डवनन्दन ॥ इति संचिन्त्य मनसा पुराहं विश्वमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मना ॥' इति तद्वचनेन तस्य शिवस्य सर्वाराध्यत्वज्ञापनार्थत्वस्य च कण्ठतः प्रतिपादनाच्च , 'जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः । आभ्यां लिङ्गेऽर्चितो देवस्त्वयार्चायां युगेयुगे ॥' इति द्रोणपर्वण्यपि अश्वत्थामानं प्रति लिङ्गार्चनादेव कृष्णार्जुनयोरुत्कर्षं प्रतिपादयतो बादरायणस्य वचनेन, 'क्लिश्यमानेषु भूतेषु तैस्तैर्भावैः पृथक्पृथक् । दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥' इति इह परत्र च दुर्गाति

तरणोपायं पृष्टवन्तं युधिष्ठिरं प्रति वर्णाश्रमधर्मानतिक्रमेण 'य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् । ते तरन्तीह दुर्गाणि न तेऽत्रास्ति विचारणा॥' इत्यादिना नारायणपितामहशतक्रतुभजनानां दुर्गातितरणोपायत्वप्रतिपादनानन्तरं 'यं विष्णुरिन्द्रश्शम्भुश्च ब्रह्मा लोकपितामहः । स्तुवन्ति विविधैस्स्तोत्रैर्देवदेवं महेश्वरम् । तमर्चयन्ति ये शश्वत् दुर्गाण्यतितरन्ति ते ।' इति शान्तिपर्वणि भीष्मवचनेन च 'यस्य ब्रह्मा च विष्णुश्च त्वं च शक्र सहामरैः । अर्चय(ध्वं)ध्वे सदा लिङ्गं तस्मात् श्रेष्ठतरो हि सः ।' इत्यानुशासनिके इन्द्रं प्रत्युपमन्युवचनेन च शिवस्य विष्ण्वाराध्यत्वेन निरतिशयोत्कर्षस्य स्फुटीकरणाच्च । तस्मान्महाभारते बहुशश्शिवस्य गीताद्यनेकप्रदेशप्रतिपादितापरिमितमहिमविशिष्टनारायणाराध्यत्वनिबन्धनेन तस्यापि मूलत्वं तत एव सर्वाराध्यत्वं च विभावितमवसीयते । तथा 'स एष भगवानीशस्सर्वतत्त्वादिरव्ययः । सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः । सोऽसृजद्दक्षिणादङ्गात् ब्रह्माणं लोकसम्भवं । वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरम् । युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथासृजत् ॥' इत्याद्यानुशासनिकवचनप्रपञ्चेन 'ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः । विष्णुर्ब्रह्मा शशी सूर्यश्शक्रो देवाश्च सान्वयाः । सृज्यन्ते ग्रस्यते[1] चैव तमोभूतमिदं यदा । अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वरः ।' इत्यादिशान्तिपर्वादिवचनैश्च ब्रह्मविष्ण्वादिसकलप्रपञ्चमूलभूतत्वं शिवस्य कण्ठतोऽपि प्रतिपादितं दृश्यते । अतो गीतादिषु कृष्णस्य सर्वकारणत्वादिवचनानामपि तन्मूर्तावसम्भवात् आर्थिकतया क्वचित् मूलमूर्तौ पर्यवसानसापेक्षाणां प्रदेशान्तरप्रसिद्धसर्वादिमूलभूतशैवमूर्तावेव पर्यवसानमग्रे प्रपञ्चयिष्यमाणं सुखेन संघटत इति कृत्स्नमपि भारतमविरोधेन शिवोत्कर्ष एव विश्राम्यति । यत्तु तत्र क्वचित्क्वचित्तन्निकर्षवचनमिव प्रतीयते, तत् सर्वं विष्णुविरिञ्चाद्युद्भूततदवतारभेदविषयमेव । तथाहि—यत्र यत्र भारते पुराणे वा क्वचित्क्वचिद्विष्णोर्विधातुर्वा रुद्रादुत्कर्षः प्रतीयते, प्रायस्तत्र सर्वत्रापि स रुद्रस्तमोगुणोपाधित्वसंहारकारित्वहरिक्रोधप्रभवत्वविरिञ्चललाटसम्भवत्वाद्यन्यतमपरमशिवव्यावृत्तविशेषणोपादानेन तद्विभूतिविशेषरूपो ज्ञाप्यते । यत्र न तादृशविशेषणोपादानं, यथा महाभारते—'ब्रह्मा सुरगुरुः स्थाणुः मनुश्च परमेष्ठिजः ।' इत्यादौ, 'ब्रह्मा स्थाणुर्मनुर्दक्ष' इत्यादौ च 'प्रजापतीनां परिगणने, यथा च सुन्दोपसुन्दोपाख्याने 'तत्र विष्णुर्महादेवः तत्राग्निर्वायुना सह ।' इत्यारभ्य 'ऋषयस्सर्व एवैते पितामहमुपासते ।' इत्यन्तेन विष्ण्वादिसकलदेवतानामृष्यादीनां च पितामहमुपासीनानां तत्सद्भावस्थितिवर्णनानन्तरम् 'इन्द्रस्स्थाणुश्च

१. गृह्यते इति पाठान्तरम् ॥

भगवान् धैर्यं त्यक्त्वा प्रतिष्ठिताविति। 'एवं चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरे'ति तिलोत्तमादर्शनाय रुद्रस्य मुखचतुष्टयसृष्टिकीर्तने, यथा वा मृत्युसम्भवोपाख्याने 'ततो हरो जटी स्थाणु'रिति प्रस्तुत्य तस्य ब्रह्माणं प्रति 'भवता हि नियुक्तोऽहं प्रजानां परिपालने।' इत्यादिवचनोपन्यासे, एतादृशस्थलेष्वपि स्थाणुशब्दग्रहणस्य प्रायिकत्वात् तेनैव स्वविभूतिविशेषरूपः ख्याप्यते। 'स्वात्मजैरेव तै रुद्रैः निवृत्तात्मा व्यतिष्ठत। स्थाणुत्वं तेन तस्यासीद्देवदेवस्य शूलिनः॥' इति कौर्मे, 'ततः प्रभृति देवोऽसौ न प्रसूते शिवाः प्रजाः। ऊर्ध्वरेतास्स्थितः स्थाणुर्यावदाभूतसंप्लवम्॥' इति वायूक्तौ, 'ततः प्रभृति विश्वात्मा न प्रसूते शिवाः प्रजाः। स्थाणुवन्निश्चलो यस्मात् स्थितः स्थाणुरिति स्मृतः॥' इत्यादित्यपुराणे च ब्रह्माङ्गभुवं शिवस्यावताररूपमंशं शम्भुं प्रस्तुत्य स्थाणुशब्दस्य तन्नामत्वप्रतिपादनात्, महाभारतेऽपि भीष्मपर्वणि सभापर्वणि च 'यत्र भूतपतिस्सृष्ट्वा सर्वलोकान् सनातनः। उपास्यते तिग्मतेजाः वृतो भूतैस्सहस्रशः।' इति मैनाके उपास्यस्य शिवस्य सन्निधानमुक्त्वा 'नरनारायणौ ब्रह्मा यमस्स्थाणुश्च पञ्चमः। उपासते यत्र परं सहस्रयुगपर्यये॥' इति तदुपासकपरिगणनपरे अनन्तरश्लोके शिवोपासकेषु परिगणनेन राजधर्मे 'भूयस्स भगवान् ध्यात्वा चिरं शूलवरायुधः। तस्यतस्य निकायस्य चकारैकैकमीश्वरम्॥ देवानामीश्वरं चक्रे देवं दशशतेक्षणम्। यमं वैवस्वतं चापि पितॄणामकरोत्पतिम्॥' इत्युपक्रम्य 'रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः। महात्मानं महादेवं विशालाक्षं सनातन'मिति शिवनियम्येषु परिगणनेन च स्थाणुशब्दितस्य परमशिवमूर्तिव्यतिरिक्तावताररूपमूर्त्यन्तरत्वस्फुटीकरणाच्च। राजधर्मवचने हि विशालाक्षशब्देन स्थाणुरेवोच्यते। तत्रैव प्रदेशान्तरे ब्रह्मप्रणीतां नीतिं प्रस्तुत्य 'ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः। बहुरूपो विशालाक्षः शिवस्स्थाणुरुमापतिः।' इति तस्य तत्र प्रयोगात्, अनन्तरं 'स देवस्सर्वभूतात्मा महादेवस्सनातनः। असङ्ख्यातस्सहस्राणां रुद्राणां स्थानमव्ययम्। युगानामायुषो ह्रासं विज्ञाय भगवान् शिवः। सञ्चिक्षेप ततश्शास्त्रं महार्थं ब्रह्मणा कृतम्। वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत॥' इति तत्कृतनीतिशास्त्रे वैशालाक्षसमाख्याकीर्तनाच्च। यत्र तादृशस्य अंशविशेषनाम्नोऽप्यग्रहणं, तत्रापि विधातुर्विष्णोर्वा परमशिवादुत्कर्षस्यासम्भवात् परैरपि त्रिमूर्त्युत्तीर्णस्य तस्यानभ्युपगमे च रुद्रनिकर्षविभावनानां संहाररुद्रतदवतारादिविषयत्वस्य अवश्यवक्तव्यत्वात् 'वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते। रुद्रस्यासौ हरस्यास्य विभूतेरेव केवलम्॥' इत्यादिपराशरपुराणादिवचनदर्शनाच्च तथावसीयते। न च शिवस्य विष्णोर्विरिञ्चाद्वा उद्भवादि-

वचनादपि निकर्षसूचनं शङ्कनीयम् । 'अहं च भवतो वक्त्रात् कल्पान्ते घोररूपधृत् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः । अनादिनिधनो देवश्चैतन्यादिसमन्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः । अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः ।' इत्यादिकौर्मराजधर्मादिवचनैस्तस्य लोकानुग्रहार्थमैच्छिकावतारत्वोक्तेः । तस्मात्सर्वथाप्यविरोधेन महाभारतं शिवोत्कर्ष एव विश्राम्यतीति भावः ॥ ३७ ॥

इति महाभारतस्य शिवपरत्वनिरूपणम् ।

---

प्रबन्धो वाल्मीकेरपि तव परत्वं द्रढयति
स्फुटं यत्र ब्रह्माच्युतहरपरत्वं तव विभो ।
प्रियश्लोघभावोक्त्या भवति हयमेधे रघुपतेः
तदाराध्यत्वं ते दृढमपि च यत्र प्रकटितम् ॥ ३८ ॥

रामायणे युद्धकाण्डे तावदादित्यहृदये—'ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥' इति ब्रह्माच्युतहरेश्वरत्वं शिवस्य प्रतिपादितम् । मण्डलाभिमानिन्याधिकारिके तदन्वयायोगात् 'रौद्राय वपुषे' इति विशेषणसामर्थ्याच्च तस्य तदन्तर्वर्तिनि शिवे पर्यवसानात् 'एष ब्रह्मा च विष्णुश्च शिवस्स्कन्दः प्रजापतिः ।' इत्यादिना कृत्स्नस्यापि स्तोत्रस्य तत्परत्वावगमाच्च । अपि चोत्तररामायणे अश्वमेधारम्भात् प्राक्कर्तव्यक्रतुविशेषविचारसमये अश्वमेधेन विष्णुमाराध्य शतक्रतुः ब्रह्महत्यामतरदिति अश्वमेधे लक्ष्मणेन श्लाघिते तस्य श्लाघ्यतामङ्गीकृत्य स्वयमिलोपाख्यानकथनेन तस्य शिवप्रीतिकरत्वं प्रतिपादयतो रामचन्द्रस्य 'नान्यं पश्यामि भैषज्यमन्तरेण वृषध्वजम् । नाश्वमेधात् परो यज्ञः प्रियश्चैव महात्मनः ॥' इति तदुपाख्यानान्तर्गततदीयवचसा तेन शिव एवाराधनीय इति भावसूचनेन रहसि संमन्त्रणानन्तरं वासिष्ठादीनाहूय चिकीर्षिते ख्यापिते 'ते तु रामस्य तच्छ्रुत्वा नमस्कृत्वा वृषध्वजम् । अश्वमेधाद्द्विजास्सर्वे पूजयन्ति स्म नित्यशः' । इति शिवसम्बन्धेनैवाश्वमेधस्य श्लाघोपन्यासेनाश्वमेधेन रामचन्द्रश्शिवमारराधेति सूचितम् । 'रामोऽपि पालयामास राज्यं परमधार्मिकः ॥' इत्यारभ्य पठितेन 'विशेषात् ब्राह्मणान् सर्वान् पूजयामास चेश्वरम् । यज्ञेन यज्ञहन्तारमश्वमेधेन शङ्करम् ।' इति 'कौर्मवचनेन, अभिषिक्तस्ततो राज्ये रामो राजीवलोचनः । पालयन् पृथिवीं सर्वां धर्मेण मुनिपुङ्गवाः । अयजद्देवदेवेशमश्वमेधेन शङ्करम् ।' इति आदित्यपुराणवचनेन च कण्ठोक्तं शिवस्य तदाराध्यत्वं वि-

भावितम् । तथारण्यकाण्डे 'कृताभिषेकस्स रराज रामस्सीताद्वितीयस्सह लक्ष्मणेन । कृताभिषेकस्त्वगराजपुत्र्या रुद्रस्सविष्णुर्भगवानिवेशः ।' इत्युपमानिबन्धनव्याजेनाप्यादिकविना शिवोत्कर्षस्स्फुटीकृतः । वासिष्ठरामायणे च— 'न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः ।' इत्यादिना सदाशिवस्यैव पूजनीयत्वोपदेशेन तस्य सर्वोत्तरत्वं प्रकटीकृतम् । कथं च ज्ञायते तत्र स एव पूजनीयत्वेन उपदिष्ट इति, 'पूजयेच्चतनं शिव'मिति, 'इमं ध्यायेत परं शिवं, सर्वत्र परमं शिवमि'ति व्यवहारात् मनोन्मनशक्तिस्थपञ्चाक्षरकलादिप्रसिद्धशैवपीठस्थित्युपन्यासात् 'उन्मनान्तपदातिग'मिति उन्मनान्तसकललोकातीतलोकावस्थानप्रतिपादनाच्च । यत्तु बालकाण्डे शिवनारायणयोस्समरसन्नाहे 'अधिकं मेनिरे विष्णुमि'ति देवानां नारायणस्य बलाधिक्यप्रतिपादकं वचनं, तत् भारतादिषु शिवेन तस्मै स्वाधिकं शौर्यं दत्तमिति प्रतिपादनात् स्वदत्तवरपरिपालनार्थं शिवस्य न्यूनबलत्वाभिनयेनान्यथासिद्धं न विष्णोरुत्कर्षं गमयितुमीष्ट इति न विरोधः ॥३८॥

॥ इति रामायणस्य शिवपरत्वनिरूपणम् ॥

**प्रसिद्धास्स्मर्तारश्शुभद मनुयोगीश्वरमुखाः**
**पतञ्जल्याद्याश्च प्रथितमतयो दर्शनकृतः ।**
**प्रभिन्दाना मार्गानपि च विविधानन्यविषये**
**भवन्तं विश्वस्मादधिकमुपगच्छन्ति भगवन् ॥३९॥**

मनुस्तावद्धर्मशास्त्रोपसंहारे— 'प्रशासितारं सर्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥' इति सर्वान्तर्यामित्वादिगुणकं परमात्मानमुपदिश्य 'एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥' इति तत्र वैदिकव्यवहारबाहुविध्यं प्रदर्श्य 'एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः । जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ।' इति मूर्तिपञ्चकेन सर्वभूतव्याप्तिलिङ्गप्रदर्शनेन शिव एव ब्रह्मेति स्वमतं स्पष्टीचकार । प्रतिपादिता हि तैत्तिरीयोपनिषदा 'सवितृमण्डलमध्यस्थं शिवं प्रस्तुत्य तस्य मूर्तिपञ्चकेन सर्वभूतव्याप्तिः 'स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतमि'त्यादिना । यद्यपि पञ्चात्मेत्यविशेषेण श्रुतं, तथापि तत्र प्राक्सद्योजातादिमूर्तिपञ्चकस्य प्रतिपादनात् तदेवेह व्याप्त्युपदेशायोपन्यस्तमिति गम्यते । अत एव लैङ्गपुराणादिषु— 'मूर्तयः पञ्च विख्याताः पञ्चब्रह्माह्वयाः पराः । सर्वलोकशरण्यस्य शिवस्य परमात्मनः ।' इति तस्य सद्योजातादिमूर्तिपञ्चकं विधाय 'पञ्चब्रह्मात्मकं सर्वं जगत्स्था-

१ न्यूनबलत्वाभिमानेन इति पाठान्तरम् ।

वरजङ्गममि'ति सामान्यत ईशानादिक्रमेण तेषां क्षेत्रज्ञप्रधानमहदहंकारमनश्श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थवियदादिपञ्चभूततन्मात्रातत्कार्यभूतपञ्चकाद्यधिष्ठातृत्वप्रतिपादनेन विशेषतश्च तस्य सर्वभूतव्याप्तिः प्रतिपादिता । यत्त्वत्र परेषां मतं—मनुना धर्मशास्त्रोपक्रमे 'ततः स्वयंभूः भगवानि'त्युपक्रम्य 'तेन नारायणः स्मृत' इत्यन्तेन नारायणस्य सर्वकारणत्वप्रतिपादनात् तत्रैव प्रशासितारमित्याद्यपि योजनीयम् । अत्र 'प्रशासितारं सर्वेषामि'ति नारायणस्य सर्वान्तर्यामित्वम् 'एनमेक' इति श्लोकेन तस्य सर्वान्तर्यामित्वलब्धतदभिधानभावैरग्न्यादिशब्दैः एकैकेषु वेदभागेषु परस्पराविरोधेन प्रतिपाद्यत्वम्, 'एष सर्वाणी'तिश्लोकेन स्वाधिष्ठितैर्वियदादिभिः सर्वप्राणिजातव्यापित्वं च प्रतिपाद्यत इति, तत्रोपक्रमे विरोधशंका तावत्तस्य शिवस्यैव सर्वोत्कर्षविभावने तात्पर्यव्यवस्थापनेन महोपनिषदुपक्रमार्थनिर्णये निपुणतरमुन्मूलयिष्यते । इह यस्य सर्वान्तर्यामित्वं तल्लब्धस्वाभिधानभावैरग्न्यादिशब्दैरेकैकेषु वेदभागेषु व्यवहारः, स्वमूर्तिभेदैर्वियदादिभिः सर्वभूतव्यापित्वं च स परमात्मत्वेन निर्धारित इति परेषामपि सम्प्रतिपन्नोऽर्थः । एवंचसति शिव एव तथा निर्धारित इति सुखेन शक्यं निर्णेतुम् । स एव सर्वान्तर्यामीत्यधस्ताद्व्यवस्थापनात् । 'अग्निं पुरा तनयित्नोरचित्तात्' 'रुद्रो वा एष यदग्निः, तस्यैते तनुवौ घोरान्या शिवान्या' इत्यादिवेदभागेषु तस्याग्निशब्देन व्यवहारदर्शनात् । 'किमेभिरमरैरन्यैः पूजितैरध्वरे फलम् । राजा चेदध्वरस्यास्य न रुद्रः पूज्यते त्वया ॥ द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः । घोरा चान्या शिवा चान्या ते चैव शतधा पुनः' ॥ इत्यादिभिः वायुसंहितामहाभारताद्युपबृंहणैः 'आवो राजानमध्वरस्य रुद्रं' 'रुद्रो वा एष यदग्निरि'त्यादिश्रुतीनां शिवपरत्वनिर्णयात् 'वेदास्त्वामभिदधतीह रुद्रमग्निं त्वामेकं शरणमुपैमि रुद्रमीशमि'ति कौर्मे, 'वदन्त्यग्निं महादेवं तथा देवं महेश्वरम् । एकाक्षरं त्र्यम्बकं च विश्वरूपं शिवं तथा ।' इत्यानुशासनिके च शिवस्य वेदभागेषु अग्निशब्देन व्यवहारप्रतिपादनात्, 'अभित्वा शूर नोनुम' इतिमन्त्रे अथर्वशिरसि ईशाननामनिर्वचनानन्तरं पठिते शिवस्येन्द्रशब्देन व्यवहारात् 'प्रजापतिश्चरति गर्भे अन्तरि'ति प्रजापतिशब्देन 'यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः, ब्रह्मा शिवो मे अस्तु' इति च तत्पर्यायेण च व्यवहारात्, 'आरुद्रासः' इति मारुतसूक्ते 'मरुत्सु कतमो रुद्रः' इत्यादिबृहदारण्यकश्रुतौ 'ये रुद्रास्ते खलु प्राणाः ये प्राणास्ते तदात्मकाः' इति वायुसंहितायां च प्राणेषु च रुद्रपदप्रयोगस्य रुद्राधिष्ठितत्वाभिप्रायत्वेन रुद्रस्य तदन्तर्यामिभावेन तन्नाम्ना व्यवहार्यत्वावसायाच्च वियदादिभिर्मूर्तिभिस्सर्वभूतव्यापित्व-

१. विरूपाक्षमिति पाठान्तरम् ॥

स्य चाष्टमूर्तौ तवैवाङ्गस्याच्च। तस्मादुदाहृतमनुवचनानां शिवस्यैव परभावनिर्धारणे तात्पर्यं युक्तम्। तथा योगीश्वरोऽपि योगयाज्ञवल्क्ये धारणाध्याये पृथिव्यादिस्थानेषु ब्रह्मादिसदाशिवान्तधारणाविधानानन्तरम् 'एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे। ब्रह्मादिकार्यरूपाणि स्वेस्वे संहृत्य कारणे। युक्तचित्तस्तदात्मानं योजयेत परमेश्वरे'। इति ब्रह्मादीनां पूर्वपूर्वस्य उत्तरोत्तरकार्यत्वप्रदर्शनेन सदाशिवस्य सर्वकारणतया परभावं विभावयामास। आश्वलायनोऽपि धर्मशास्त्रोपक्रमे 'आदाविदमभूत्सर्व'मित्यादिना मूलकारणं तदधिष्ठातारं च शिवं प्रस्तुत्य मायाशक्तिरूपस्य तमसश्शिवसन्निधिलब्धं कार्योन्मुख्यरूपं संक्षोभं च प्रतिपाद्य 'सा च संक्षोभिता शक्तिश्शिवेन परिबृंहिते'त्याद्यारभ्य ततो गुणविभागमहदहङ्कारचतुर्मुखब्रह्मसृष्ट्याद्युपवर्णनात, सप्तमाध्याये 'सिसृक्षुरेक एवाग्रे समासीनश्शिवस्स्वयम्। दृष्ट्वा गुणमयीं मायां सूक्ष्मरूपामपाकरोत्। तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम्॥' इति विष्णोस्तत्सृष्टत्वकथनात्, तदनन्तरं यज्ञोपवीतोत्पत्तिप्रकारमुक्त्वा तद्भागविशेषाश्रितदेवताविभागसमये 'तावल्लोकास्त्रयो वेदाः त्रयो देवास्त्रयोऽग्नयः। शिवसृष्टास्त्रयो वर्णास्त्रिवृत्सूत्रं समाश्रयन्॥ तद्ग्रन्थिमाश्रयत्तारस्त्रिमात्रो नादसंयुतः। तद्ग्रन्थ्यग्रं च सावित्री वेदमाता शिवाज्ञया॥' इति त्रयाणां देवानां शिवाज्ञया उपवीतभागसमाश्रयणकथनात्, कल्पसूत्रे शिवं प्रस्तुत्य 'सर्वाणि ह वा एतस्य नामधेयानि सर्वास्सेनास्सर्वाण्युच्छ्रयणानी'त्यभिधानाच्च तस्य सर्वेश्वरत्वं प्रदर्शयामास। बोधायनश्च शिवपूजाविधौ ब्रह्मविष्ण्वोस्तदावरणे निवेशात् देवतान्तरपूजाविधिषु शिवस्यावरणदेवतास्वसन्निवेशाच्च तस्य सर्वोत्कर्षं सूचयामास। कात्यायनोऽपि 'रुद्रो ह्येवैतत् सर्वमि'ति तस्य सर्वात्मत्वेन परभावं द्योतयामास। शास्त्रकारेषु पतञ्जलिस्तावत् 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, तस्य शास्त्रं निमित्तं, तत्र निरतिशयं सार्वज्ञ्यबीजं, स पूर्वेषामपि गुरुः कालेनानवच्छेदात, तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावनमि'ति शिवपरभावविषयाणि 'न शिवस्याणवो बन्धः कार्मो मायेय एव वा। प्राकृतो वाथवा बन्धो ह्यहङ्कारात्मकस्तथा। न रागो न च विद्वेषश्शम्भोरमिततेजसः। न चाप्यभिनिवेशोऽस्य कुशलाकुशलान्यपि। स पुंविशेषः कथितो भगवानन्तकान्तकः। लोके सातिशयत्वेन ज्ञानैश्वर्ये विलोकिते। शिवेनातिशयत्वेन स्थितिं प्राहुर्मनीषिणः॥ प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम्। उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम्। कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः। सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः। प्रणवो वाचकस्तस्य शिवस्य परमात्मनः। शिवरुद्रादिशब्दानां प्रणवस्तु परस्स्मृतः[1]। शम्भोः प्रणव

१. प्रणवोऽत्र परस्स्मृतः इति, प्रणवोऽतिपरस्स्मृत इति च पाठान्तरम्॥

वाच्यस्य भावना तज्जपादपि। या सिद्धिस्सा परा प्राप्या भवत्येव न संशयः ॥' इत्यादिवायुसंहितोत्तरभागसप्तमाध्यायपठितवचनैकार्थ्यानि सूत्राणि निबध्नन् शिवस्यैव परभावं प्रतिपादयामास । अत एव तदैकार्थ्यादेव सूत्राणां तन्मूलत्वमवधार्य तन्त्रकौमुदीकारः तत्र 'निरतिशयं सार्वज्ञ्यबीजमि'ति सूत्रे तस्य 'संज्ञादिविशेषप्रतिपत्तिरागमतः पर्येष्यती'ति वैयासिकसूत्रभाष्यव्याख्यानावसरे संज्ञा शिवरुद्रमहेश्वरादिः, आदिशब्देन षडङ्गदशाव्यये संगृहीते इति सूत्राणां शिवविषयत्वं स्पष्टीचकार । तथा नैयायिकादयः स्वाभिमतं परमात्मानं भवशिवस्थाणवीश्वरादिशब्दैः व्यवहरन्तः परमेश्वरस्यैव परभावं स्वाभिमतं प्रकटयामासुः । तथा भरतमुनिमतानुसारिणश्च— 'कल्पान्तरे कदाचित्तु दग्ध्वा लोकान्महेश्वरः । मनसैवासृजाद्विष्णुं ब्रह्माणं च निजेच्छया ।' इत्यादिरसोत्पत्तिप्रकरणादिषु व्यवहरन्तः शिवस्यैव परभावमुदाहरन्तीत्युदाहार्थम् । आगमेषु तु बहुषु शिवस्य सर्वोत्कर्षप्रतिपादनं स्पष्टमेव ॥३९॥

॥ इति मनुस्मृत्यादीनां शिवपरत्वनिरूपणम् ॥

**निबन्धुस्सूत्राणां निगमशिरसोऽर्थं प्रथयताम्**
**अपि स्पष्टो भावस्तव शिव परत्वे विमृशताम् ।**
**पुमांसं योऽङ्गुष्ठप्रमितमनपेक्ष्यापरनयं**
**तवेशानश्रुत्या वरद निरचैषीत् पर इति ॥४०॥**

उक्तं तावदधस्तात्— ब्रह्मसूत्रकृता शब्दादेव प्रमित'इत्यधिकरणे ईशानशब्दरूपया अभिधानश्रुत्या न्यायान्तरनिरपेक्षया अङ्गुष्ठमात्रः पुरुषः परमात्मा निर्णीत इत्ययमर्थः परेषामपि सम्मत इति । तथा च यस्यायमीशानशब्दोऽभिधानं, तस्योमापतेः परभावः सूत्रकारस्य हृदयस्थितोऽवसीयते । देवतान्तरे योगेन लक्षणया वा प्रयोगोपपत्त्या तेष्वनुशासनाभावात् रूढिक्लृप्त्यभावेन तदभिधानश्रुतित्वायोगादिति भावः ॥४०॥

॥ इति ब्रह्मसूत्राणां शिवपरत्वनिरूपणम् ॥

एवं पुराणमहाभारतरामायणानेकस्मर्तृशास्त्रकारसम्मतिभिश्शिवस्य परभावस्समर्थितः । अथ परवाचित्वेन सम्मतस्य ब्रह्मपदस्य 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः'इति गीतासु तन्नामत्वेन व्यवहृतानां च पदानां शास्त्रेषु प्रयोगनिर्वचननामत्वानुशासनैः शिवनामत्वाविष्करणादपि तस्य परभावस्स्पष्ट इत्याह—

**पदं यत् ब्रह्मेति प्रथिततरमोन्तत्सदिति च**
**प्रसिद्धं यद्गीतास्वचलतनयावल्लभ विभो ।**
**अमीषामर्थं त्वामधिगमयतश्शास्त्रनिकरात्**
**अपि स्पष्टं नाथ त्वमिह परमं दैवतमिति ॥४१॥**

२. तनयानन्दजलधे इति पाठान्तरम् ।

निरुक्तं तावत् ब्रह्मपदमथर्वशिरसि शिवनामावलिनिर्वचनप्रस्तावे—'अथ कस्मादुच्यते परं ब्रह्मे'त्यादिना, शिखायां च 'सर्वाणि बृंहयतीति ब्रह्मे'ति, लैङ्गादित्यपुराणयोश्चाथर्वशिरोविवरणे—'तस्मात् बृहन्न यत्तस्मात् परं ब्रह्मेति गीयत' इति। प्रयुक्तं चादिपर्वणि भगवता बादरायणेन शिवे—'युधिष्ठिरो धर्ममयो महाद्रुमस्स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा । माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥' इति । अत्र हि कृष्णसाहाय्यात् ब्राह्मणानुग्रहाच्च पाण्डवानां जय आसीदिति प्रसिद्धेस्तज्जयोपायभूतस्य कृष्णस्य तथाभूतानां ब्राह्मणानां च मध्ये तद्वदेव मूलत्वेन निरूप्यमाणो ब्रह्मशब्दार्थोऽपि तथाभूत एव ग्रहीतुं युक्तः तदैकरूप्यायेति महादेवतेजोऽभिगुप्त्यैव तेषां जय आसीदिति सौप्तिके स्फुटत्वात्, शान्तिपर्वणि शिवं प्रस्तुत्य 'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून्।' इति पार्थं प्रति कृष्णवचनात् आश्वमेधिके शिवं प्रस्तुत्य 'वयं सर्वे च तद्भक्तास्स चास्माकं प्रसीदति। तत्प्रसादाद्धयं राज्यं प्राप्ताः कौरवनन्दने'त्यारभ्य 'कस्तां सेनां महाराज मनसापि प्रधर्षयेत् । द्रोणकर्णमुखैर्गुप्तां महेष्वासैः प्रहारिभिः । ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् । तस्यैव च प्रसादेन निहताश्शत्रवस्तवे'ति युधिष्ठिरं प्रति भीमसेनवचनात्, पाद्मपुराणे—'तत्रास्य मायिनो विष्णोरंशः कृष्णो हि तिष्ठति । दर्शयिष्यत्युपायांस्ते स यः पक्षे ममाज्ञया।।'इति पार्थं प्रति श्रीमहादेववचनाच्च स एव ब्रह्मशब्दोपात्त इति परिशेषादौचित्याच्च निश्चीयते। 'यतो धर्मस्ततो जय' इति धर्मस्य जयमूलत्वप्रसिद्धेः तत्प्रमितिद्वारा कथञ्चिज्जयोपायभूतस्य वेदस्य ब्रह्मशब्दार्थस्य सद्भावेऽपि चेतनैरवयवैरत्र सावयवरूपकसम्पादनदर्शनात्, 'दुर्योधनो मन्युमयो महाद्रुमः कर्णस्स्कन्धश्शकुनिस्तस्य शाखा । दुश्शासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोऽम्बिकेय' इति पूर्वश्लोकेऽपि तैरेव तत्सम्पादनदर्शनाच्च ब्रह्मशब्दस्य चेतनपरत्वावश्यम्भावेन शब्दपरत्वायोगात् । 'ॐतत्सदि'ति पदानि तु तैत्तिरीयोपनिषदि—'शिवो मे अस्तु सदाशिवों, तत्पुरुषाय विद्महे, पुरुषो वै रुद्रस्सन्मह' इति प्रयुक्तानि। तत्पुरुषायेत्यत्र लुप्तविभक्तिकं तदिति भिन्नं पदम् । 'शिवो महेश्वरो रुद्रश्शङ्करो ब्रह्म सत्पदम् । एवमादीनि नामानि विशिष्टानि परस्य तु ।' इत्यादिना स्कान्दादिष्वेषां शिवनामत्वानुशासनानि द्रष्टव्यानि ॥४१॥

॥ इति ब्रह्मादिशब्दानां शिवपरत्वनिरूपणम् ॥

एवं परनामत्वेन प्रसिद्धानां शिवे प्रयोगादिभिस्तस्य परभावस्समर्थितः । अथ शिवनामत्वेन प्रसिद्धानां निरतिशयैश्वर्यसमर्पणक्षमावयवशक्तिबलात्तं समर्थ्यते—

त्वदन्यं क ब्रूमः परमशिव सर्वेश्वर इति
त्वमीशानादीनां ननु भवसि वाच्यश्श्रुतिगिराम् ।
समाख्यानं त्वेताश्श्रुतय इति मोहान्धकुहरे
स्फुरन्मीमांसादृक्प्रपतति न चेतः कृतधियाम् ॥ ४२ ॥

ईशानेशेश्वरेतिशब्दाः कथञ्चिद्योगमात्रेणान्यत्रापि प्रयुज्यमानाः योगरूढ्या शिवासाधारणाः, स्फुटयोगप्रख्यापनात् 'यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो नित्यं सर्वशास्त्रार्थविज्ञाः'[1] ॥ इत्यादिहरिवंशादिवचनदर्शनाच्च शिवे प्रयुज्यमानानामेतेषां रूढिवद्योगस्यापि स्वविषये समुन्मेषात् । तथा चान्यत्र प्रयुज्यमाना एते पत्यादिशब्दाश्च अन्ये तत्तद्देवतावाचिपदसमभिव्याहारमपेक्ष्य वाक्यमर्यादयैव तत्रतत्र देवताविशेषे ऐश्वर्यं बोधयन्ति । शिवे प्रयुज्यमानास्तु पदान्तरसमभिव्याहारमनपेक्ष्य स्वयमेव रूढ्या शिवमुपस्थाप्य श्रुतिविधया तत्रावयवार्थमैश्वर्यं प्रतिपादयन्तीति निखिलविनियोजकप्रमाणमूर्धन्यानेकश्रुतिबलात् निरतिशयैश्वर्यविश्रान्तिश्शिव एवेति सिध्यतीति भावः । यत्तु परैः 'समाख्या यौगिकी संज्ञे'ति मीमांसकश्लोकैकदेशश्रवणमात्रसन्तुष्टैः उक्तम्—ईशानादिशब्दाः समाख्याः, अत एव 'पतिं विश्वस्यात्मेश्वरमि'त्यादिवाक्येभ्यो दुर्बलाश्चेति, तन्निरासमभिप्रेत्याह— समाख्या इति । अयमाशयः—स्वस्वप्रमेयपरिच्छेदं प्रति सन्निकर्षविप्रकर्षविशेषकृतं श्रुतिलिङ्गादीनां बलाबलं शीघ्रतरेण प्रमाणेन क्वचिदर्थे परिच्छिन्ने पुनः परिच्छेदान्तराप्रवृत्तेः, 'प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरगामित्वात् तथेह श्रुतिलिङ्गयोः ।' इत्यादिना मीमांसकैरपि तथैव बलाबलप्रतिपादनाच्च । तथा च शिवे प्रयुज्यमाना ईशानादिशब्दाः तद्गतैश्वर्यप्रतिपादने पदान्तरसमभिव्याहारनिरपेक्षतया सन्निकृष्टाः, 'पतिं विश्वस्ये'त्यादयस्तु देवताविशेषगतैश्वर्यप्रतिपादने पदान्तरसमभिव्याहारसापेक्षतया विप्रकृष्टाः इति व्यवस्थिते बलाबले कथं परिभाषामात्रेण वैपरीत्यमापतेत् । 'समाख्या यौगिकी संज्ञे'ति वदतामपि 'पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ।' इत्यादितदीयवचनदर्शनात् यत्र यौगिकपदे तदवयवाभ्यां शेषशेषिभावान्वयिपदार्थयोरेवोपस्थितिः, न तु 'व्रीहीन् प्रोक्षति, अरुणया क्रीणाती'ति वाक्ययोर्द्वितीयातृतीयाभ्यामिव शेषत्वस्य शेषित्वस्य च तत्पौरोडाशिकहोतृचमसादिपदरूपे तत्र शेषशेषिभावे समाख्यारूपं षष्ठं प्रमाणमिति मतं, न तु यत्र यौगिकपदे योऽर्थः प्रकृत्यादिवाच्यः, तत्रापि तत्समाख्येति । आग्ने-

1. विद्वांस इति पाठान्तरम् ॥

यादिपदेषु यौगिकेष्वपि अग्न्यादीनां देवतात्ववाचितद्धितसद्भावेन तेषां देवताश्रुतित्वस्य तैरेवाभ्युपगमात्, इह चेश्वरादिपदेषु शिवैश्वर्यं प्रकृत्यंशस्य वाच्यमेवेति न तत्र तेषां तन्मतमर्यादयापि समाख्यात्वशङ्कावकाशः । अस्माकं तु विवरणानुक्तरीत्या समा चासावाख्या चेतिव्युत्पत्त्यान्यत्र प्रतिपन्नस्यान्यत्र प्रतिपन्नसम्बन्धनिमित्तं संज्ञासाम्यं समाख्या । यथा 'अग्निर्यज्ञं नयतु प्रजानन्' इत्यादिमन्त्राणामतिमुक्तिहोमानां च परस्परसम्बन्धनिमित्तम् आध्वर्यवसंज्ञासाम्यमिति नात्र कथमपि समाख्यात्वचोद्यावकाश इति । नन्वेवमीशानादिशब्दानां शिवगतैश्वर्ये श्रुतित्वेऽपि 'ईशानाय स्थालीपाकः प्राज्ञ ईश्वरस्तृतीयः पाद' इत्यादिशास्त्रेषु विधेयान्तरपरेषु [1]देवताविशेषसमर्पणमात्रप्रयोजनपरतया प्रयोगेन शिवगतैश्वर्यप्रतिपादनतात्पर्येण प्रयोगादर्शनात् सम्भवद्वाक्यार्थविधितात्पर्येभ्यो 'भूतस्य जातः पतिरेक आसीदि'त्यादिवाक्येभ्यो न प्राबल्यसिद्धिः । निस्तात्पर्यश्रुतेस्सतात्पर्यवाक्यस्यैव प्रबलत्वादिति चेन्न । विधेयान्तरपरवाक्यप्रवेशनं विना केवलानामेतेषां क्वचिदपि प्रयोगादर्शनात् तदसम्भवाच्च स्वातन्त्र्येण शिवगतैश्वर्यप्रतिपादनतात्पर्यासम्भवेऽपि 'आग्नेयमष्टाकपालं निर्वपेदि'त्यादिषु अग्न्यादीनां देवतात्वस्येव 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य', 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'त्यादिश्रुतिस्मृतिषु प्रसिद्धहृद्देशानुवादेन तत्र वर्णितनिखिलविशेषणविशिष्टपरमशिवावस्थानविधिपरासु तद्विशेषणतया ईशिधात्वर्थस्य ऐश्वर्यस्यापि विधौ तात्पर्यस्य निरवग्रहत्वात् । न हि तात्पर्यसम्भवेऽपि विधेयान्तरविशेषणतया विधौ तात्पर्यं, न स्वातन्त्र्येण इत्येतावतैव स्वतन्त्रविधिरूपेभ्यो वाक्येभ्यो दौर्बल्यशङ्का समुन्मिषति । तथासत्युत्पत्तिशिष्टोत्पन्नशिष्टयोरपि बलाबलवैपरीत्यापत्तेः । तस्मादुपपदादिसङ्कोचकरहिताभिरीशानादिश्रुतिभिश्शिवस्य निरतिशयैश्वर्यसिद्धिर्वज्रलेपायते । न चैवमिन्द्रपदश्रुत्या सहस्राक्षस्यापि परमैश्वर्यसिद्धिप्रसङ्गः । तस्य कार्यत्वकर्मवश्यत्वविनाशित्वादिप्रतिपादकानेकश्रुतिपुराणादिविरुद्धैकश्रुतिमात्रेण तत्सिद्ध्यप्रसङ्गात् इह तथाविरोधिमानान्तरशङ्काया अप्यनवकाशात् ॥४२॥

मन्त्रोपनिषदि तैत्तिरीयोपनिषदि च शिवे प्रयुक्तं 'तदन्यद्विश्वमीशानस्स तु विश्वाधिकस्स्मृत' इत्यादिपुराणवचनेषु च तत्र अभ्यस्तं देवतान्तरे क्वचिदप्यदृष्टप्रयोगं विनैव क्लिष्टकल्पनामतिस्फुटं तस्य सर्वोत्कर्षं परिच्छिन्दत् विश्वाधिकपदमपि प्रस्तुतेऽर्थे प्रमाणयति—

1. देवताविशेषणसमर्पणमात्राप्रयोजनपरतया इति पाठान्तरम् ॥

मयुक्तं त्वय्येव श्रुतिषु यदनेकत्र भगवन्
पुराणेष्वभ्यस्तं पुरमथन विश्वाधिकपदम् ।
परिच्छिन्दत्तत्ते स्फुटमखिललोकादधिकतां
विमूढस्वान्तानां व्यथयतितरां श्रोत्रपदवीम् ॥४३॥

इति ईशानादिपदानां शिवपरत्वनिरूपणम् ॥

एवमीशानादिपदावयवशक्तिपर्यालोचनेन परभावस्समर्थितः । अथ परिशेषादपि परमशिवमूर्तिरेव निरतिशयैश्वर्याभिव्यक्तिस्थानमिति व्यवस्थापयति –

यदि स्यादैश्वर्यं न भवति परिच्छेदविधुरं
कचिच्छान्तिं नाथ व्रजतु भवतोऽन्यत्र भगवन् ।
विभिन्नाः प्रत्यण्डं विधिहरिगिरीशा नियमिताः
त्वया कल्पेकल्पे दधति भवदाज्ञां नवनवाम् ॥४४॥

अत्र च वचनानि वायुसंहितायां तावत्- 'इतीदृशानामण्डानां कोट्यो ज्ञेयास्सहस्रशः। सर्वगत्वात् प्रधानस्य तिर्यगूर्ध्वमधस्स्थिताः । तत्रतत्र चतुर्वक्त्रा ब्रह्माणो हरयो हराः । सृष्टाः प्रधानेन सता लब्ध्वा शम्भोस्तु सन्निधिम् ।' इति, आदित्यपुराणे–'सहस्रकोटयस्सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वजाः । ब्रह्माणो हरयो रुद्रास्तत्रतत्र व्यवस्थिताः। आज्ञया देवदेवस्य महादेवस्य शूलिनः॥' इति, कौर्मे–'ब्रह्मनारायणेशानां त्रयाणां प्रकृतौ लयः। एको हि भगवानीशः कालः कविरिति स्मृतः ॥' इति, पराशरस्मृतौ 'कल्पेकल्पे लयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः।श्रुतिस्मृतिसमाचारनिर्णेतारश्च नित्यदा॥'इति, लयोत्पत्त्या लयसहितोत्पत्त्या उपलक्षिता भवन्तीत्यर्थः। वासिष्ठरामायणे–'संसारावलयो भुक्ताः निगीर्णा रुद्रकोटयः। ग्रस्तानि विष्णुवृन्दानि क न शक्ता वयं मुने।' इति, लैङ्गे–'असङ्ख्याताश्च कालाख्याः असङ्ख्याताः पितामहाः । हरयश्चाप्यसङ्ख्याता एक एव महेश्वरः ॥' इति, स्कान्दे–'असङ्ख्या विलयं यान्ति ब्रह्माणः पण्डितोत्तमाः । असङ्ख्या विष्णवो रुद्रा असङ्ख्या वासवादयः ॥' इति । वायुना तु ब्रह्मविष्णुरुद्राणां लयसाम्येऽप्युत्तरोत्तरमधिककालावस्थायित्वमुक्तं — 'ब्रह्मा विष्णुदिनं चैको विष्णू रुद्रदिने तथा॥'इति । यत्तु वचनं शान्तिपर्वणि–'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ।' इति, तत् विष्णोस्स्वरूपनित्यत्वमात्रपरं, विग्रहस्य मायिकस्य नित्यत्वायोगात् । तदितरसकलानित्यत्वप्रतिपादनं च भूतशब्दस्य वस्तुमात्रपरत्ववर्णनेनात्मैक्यात् जडवर्गमिथ्यात्वाच्च युक्तम् । अत एवेश्वरगीतासु ' अविज्ञाय विमुच्यत' इत्यन्तेन निर्गुणप्रतिपादनानन्तरं वचनं–'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।

ऋते मामिकमव्यक्तं व्योमरूपं महेश्वरमि'ति, प्रत्युत परेषामेव नित्यसूरिविभूत्याद्यभ्युपगमादिदं दुरुपपादम्। सगुणब्रह्मवादे तु 'अजात इत्येवे'त्यादिमन्त्रोपनिषन्मन्त्रत्वारस्याविरोधादुपचरितामिदं स्मृतिवचनं नेयमिति न कोऽपि विरोधः। एवं देशकालादिपरिच्छिन्नासु ब्रह्मविष्णुरुद्रमूर्तिषु निरतिशयैश्वर्याभिव्यक्त्यभावात्तुरीयकोटावम्बिकामूर्तेस्सद्भावेऽपि शक्तिरूपेण शिवोपसर्जनत्वाच्च शिवमूर्तावेव पारिशेष्यात् निरतिशयैश्वर्याभिव्यक्तिः। अत एव निश्चित्योपदिष्टं वायुसंहितायां–'ब्रह्मादयोऽपि लोकानां सर्गस्थित्यन्तहेतवः। निग्रहानुग्रहं प्राप्ताश्शिवस्य वशवर्तिनः। शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम्। अतोऽनतिशयैश्वर्यं तस्यैवेति सुनिश्चितम्।' इति। ४४।

इती परमशिवस्य निरातिशयैश्वर्यनिरूपणम्।

किंच **विरुद्धार्थानि वाक्यानि वीक्ष्य विभ्रान्तचेतसाम्। युक्तो बहूनां संवादादेकस्मादेव निर्णयः॥ अन्यथा वेदमार्गेऽपि न सिध्येत् ब्रह्म कारणम्। अब्रह्मकारणत्वेऽपि श्रुतिलेशस्य दर्शनात्। अतः प्रमाणबाहुल्यादाधिक्यं गिरिजापतेः। युक्तं निर्धारयितुमित्ययमर्थः प्रदर्श्यते—**

**अलम्मानैरन्यैरखिलजगतीनामधिपते**
**तवाधिक्यं शक्यं वदितुमियतैव स्फुटमिति।**
**त्वदुत्कर्षं भूयान् प्रथयति यदाम्नायनिचयः**
**तदर्थं व्याकुर्वन्यदपि च पुराणादिनिकरः॥ ४५॥**

वेदान्तभागेषु तावदथर्वशिखादयश्शिवोत्कर्षपरा भूयस्यश्श्रुतयः। तथा कर्मकाण्डेऽपि मन्त्रार्थवादाः। यथा चैतत्, तथात्रैव पूर्वापरश्लोकव्याख्यानेषु स्फुटम्। आहुश्चाभियुक्ताः–'मन्त्रा भवन्ति विरला विबुधान्तराणां सद्भाव एव शिव दर्शितशक्तयस्ते। त्वन्नामरूपगुणवर्णनलब्धवर्णा मन्त्रा न शक्यमभिगन्तुमियत्तया ते॥' इति। तथा शिवोत्कर्षपराणि शिवपुराणादीनि ग्रन्थसङ्ख्यया विष्णुपुराणादिभ्यो भूयांसीति तावत् स्फुटम्। पुराणसङ्ख्याया बाहुल्यमपि प्रभासखण्डे दर्शितं—'चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः। अष्टादशपुराणेषु शेषेषु भगवान् शिवः।' इति। तथोपपुराणशिवागमादिबाहुल्यमपि स्फुटमेव विदुषाम्। 'तदर्थं व्याकुर्वन्नि'त्यनेन 'वेदार्थो यः स्वयं ज्ञात' इत्यादिव्यासोक्तेश्शिवोत्कर्षपरश्रुतीनाम् अनाशङ्कनीयार्थान्तरत्वेनानन्यथासिद्धत्वरूपं शिवोत्कर्षपरपुराणादीनां साङ्ख्यादिस्मृतिभ्यः मन्वादिस्मृतीनामिव प्रत्यक्षश्रुत्यनुसारलक्षणं च प्राबल्यं सूचितम्॥ ४६॥

एवं शिवोत्कर्षपरश्रुतिपुराणादीनां तत्रतत्र प्राबल्यध्वननपूर्वकं शिवस्य तैः परभावनिर्धारणमुपपादितम्। अथ परोक्तं तेषां दौर्बल्यं नारायणोत्कर्षपरश्रुतिपुराणादीनां प्राबल्यं च निराक्रियते–श्रुतिवाक्येषु तावदित्थं बलाबलवैपरीत्यं क-

ल्पयन्ति—यद्यपि नारायणस्येव देवतान्तराणामपि तैस्तैश्श्रुतिवाक्यैः परभावः प्रत्यायितः, तथाप्यनन्यार्थपराणि तानि, नारायणस्य परभावस्त्वनन्यार्थैः श्रुतिवाक्यैः प्रतिपादित इति तदनुसारेणैव भूतार्थावधारणं युक्तम् । 'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्' 'स्तौम्यग्निं नाथितो जोहवीमि, अभित्वा शूरनोनुम' इत्यादीनां स्ववाक्येनैव 'अर्हन् बिभर्षि सायकानि धन्व, यो वै रुद्रस्स भगवान् यश्च ब्रह्मे'त्यादीनां 'ते देवा ऊर्ध्वबाहवस्स्तुवन्ति । अर्हन् बिभर्षि सायकानि धन्वेत्याह स्तौत्येवैनमेतदि'त्यादिवाक्यान्तरेण च स्तुतिपरत्वोक्तेः रुद्राध्यायादीनां नमस्कारलिङ्गयोगेनेष्टानिष्टप्राप्तिनिवृत्तिप्रार्थनालिङ्गेन च स्तुतिपरत्वावसायात् शिवस्य जगत्कारणत्वप्रत्यायिकानामपि 'कारणं तु ध्येय' इत्यादीनां जगत्सर्गप्रलयप्रकरणमध्यपातित्वाभावात् उपासनाविधिशेषत्वेनान्यपरत्वावसायात् नारायणपरभावप्रतिपादनपराणां पुरुषसूक्तादीनामनन्यपरत्वावधारणाच्च । पुरुषसूक्तं हि तावत् पुरुषस्य नारायणस्य सर्वकारणत्वसर्वेश्वरत्वादिप्रतिपादकमनन्यपरम् । लिङ्गेन वाक्येन वा केनचित्तस्य स्तुतिपरत्वाप्रतीतेः, अनुवादद्योतकहवैशब्दाद्यभावेनानुवादरूपत्वस्याप्यप्रतीतेः, प्रत्युत 'तदेतदृचाभ्यनूक्तं, तावानस्य महिमे'ति छान्दोग्योपनिषदा स्वोपदिष्टार्थसाक्षित्वेन तत्सूक्तमन्त्रपाठादस्य नारायणमहिम्नां प्रतिपादकत्वस्यैव निर्धारणाच्च । एवं 'सर्वे वेदा यत्पदमामनन्ती'तिमन्त्रेण सर्ववेदवेद्यत्वकथनं प्रतिज्ञाय 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि'ति प्रतिपादयत् काठकं 'ब्रह्मविदाप्नोति परमि'ति परब्रह्मवेदनान्मुक्तिं प्रतिज्ञाय 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मुमुक्षुभिर्वेद्यं ब्रह्म अनन्तशब्दवाच्यं नारायणरूपमिति दर्शयत्तैत्तिरीयोपनिषद्वचनं सुबालोपनिषदादिषु जगत्सृष्टिप्रलयप्रकरणमध्यपाति नारायणस्य जगत्कारणत्वादिप्रतिपादनं चानन्यपरमवधार्यत इति, तन्निराकरोति—

> अनन्यार्थैश्शब्दैश्श्रुतिषु परभावः प्रकटितः
> श्रियो देव्याः पत्युः न तु तदितरेषां दिविषदाम् ।
> अतस्तैरेवार्थावधृतिरिति मन्त्रोपनिषदा-
> द्यनध्यायो मूढान्मुखरयति मृत्युञ्जय मुधा ॥५६॥

अद्वैतवादे सगुणनिर्गुणश्रुत्योरुपासनार्थतया स्तुतिद्वारतया निष्प्रपञ्चब्रह्मप्रतिपत्त्युपायतया वा सर्वथान्यशेषमेव सर्वेश्वरत्वसर्वकारणत्वादिश्रवणमिति नाद्वैतवादिनं प्रति ऐश्वर्यविषये अनन्यपरबोधककतिपयश्रुतिवचनसिद्धवत्करणेन बलाबलविभागस्सम्भवतीति तावत्स्पष्टम् । सगुणब्रह्मवादमवलम्ब्य प्रत्यवतिष्ठमाना-

स्तु मन्त्रोपनिषदाद्युदाहरणेन प्रतिबोधनीयाः । तथा हि—मन्त्रोपनिषत्तावत्—'किं कारणं ब्रह्मे'त्यारभ्यान्तं परामृश्यमाना सर्वकारणत्वसर्वनियन्तृत्वमोक्षप्रदत्वादिविशिष्टस्य पशुपाशपतेः परमशिवस्यैव तत्त्वनिर्णयाय प्रवृत्तेति स्फुटं प्रतीयते । यत्तु 'युञ्जानः प्रथमं मन' इत्यारभ्य योगनिरूपणं, तत्तत्रैव परमकारणत्वादिना व्यवस्थापितस्य परमशिवस्य साक्षात्कारे मुक्त्युपाये साधनोपदेशार्थमवान्तरतात्पर्येण प्रवृत्तमिति न तत्रैवोपनिषदः कार्त्स्न्येन पर्यवसानं शङ्कितुं शक्यते । तदा हि अन्यत्रापि ब्रह्मनिरूपणप्राधान्येन प्रवृत्तेष्वपि प्रकरणेषु मध्ये निदिध्यासनादिविध्युपलम्भात् तेषामपि ब्रह्मणि तात्पर्यावसानं सर्वानुमतं न सिध्येत् । यच्च 'या ते रुद्र शिवा तनूरि'त्यादिमन्त्रे इष्टप्रार्थनादि, तदप्युपक्रमादिपरामर्शावगतपरब्रह्मनिरूपणप्राधान्यस्य कृत्स्नस्य प्रकरणस्य स्तुतिपरत्वं नावगमयेत् , आपादकाभावात् । तथात्वे सन्निध्यनुगुणशब्दार्थप्रत्यभिज्ञापादितमहापुरुषविषयैकप्रकरणभावानन्तरानुवाकमन्त्रविशेषश्रुतनमस्कारेष्टप्रार्थनालिङ्गाभ्यां पुरुषसूक्तस्यापि कार्त्स्न्येन स्तुतिपरत्वापत्त्या पुरुषसूक्तमनन्यपरमिति पराभिमानस्यापि भङ्गापत्तेः । एवमथर्वशिरोऽपि देवानां परमशिवस्वरूपप्रश्ने तदुत्तरत्वेन तत्स्वरूपोपदेशरूपतया प्रवृत्तत्वात् वस्तुयाथात्म्यकथनपरमवसीयते । यत्तु 'यो वै रुद्र' इत्यादि देवानां शिवोपदेशेन तत्सार्वात्म्यबोधानन्तरं स्तोत्रं, न तेन तत्पूर्वं याथात्म्योपदेशभागस्यापि स्तुतिपरत्वमुपपादयितुं शक्यम् । न च तस्यापि स्तुतिमात्रपरत्वम् । उपदेशावगततत्सार्वात्म्यावलम्बनेन प्रवृत्ततया तत्प्रपञ्चनरूपत्वात् । एवं शतरुद्रीयरुद्रसूक्तादिष्वपि लैङ्गिकं वाचनिकं वा यस्य मन्त्रस्य स्तुतिपरत्वमवसीयते, तत्रैव तद्व्यवतिष्ठते । न तावता एकसूत्रान्तर्गतिमात्रेण मन्त्रान्तराणामपि स्तुतिपरत्वापत्तिः । यत्तु शिवमन्त्राणां प्रायिकं नमस्काररूपं स्तुतिलिङ्गमुक्तं, न तत्स्तुतिमात्रे लिङ्गं, किन्तु स्वविषयोत्कर्षेऽपि नान्तरीयके । यथा चैतत्, तथास्थापितमधस्तात् । तथा चानितरसाधारणेन नमस्कारभूयस्त्वेन लिङ्गेन सर्वोत्कर्षश्शिवस्य सिध्यन् नमस्कारघटिततत्तन्मन्त्रशब्दार्थभूतसर्वाधिपत्यादिरूप एव सिध्यति । लिङ्गवशादवश्यकल्पनीये सर्वोत्कर्षे शब्दार्थभूतमुत्कर्षं परित्यज्य विधान्तरेणोत्कर्षकल्पनायोगादिति 'नमो हिरण्यबाहवे सेनान्य' इत्यादिमन्त्रजातप्रतिपन्नस्य सर्वाधिपत्यादेर्न स्तुतिलिङ्गसद्भावेऽपि परित्यागो युज्यते । यच्चाथर्वशिखायां देवतान्तराणां शिवस्य च कार्यकारणभावेन तारतम्यप्रदर्शनमुपासनाविधिशेष इत्युक्तं, तदप्ययुक्तम् । सौबालश्रुतिमहोपनिषदादिषु नारायणस्य जगत्कारणत्वप्रतिपादकेष्वप्युपासनाविधेः परेषामपि सम्मतत्वेन तौल्यात्, अथर्वशिखायां तु 'कारणं तु ध्येयः' इति शिवस्य ध्येयस्य कारणमित्येवानुवाददर्शनेन तस्य

तत्र सकलकारणत्वोपवर्णनस्य भूतार्थवादत्वावसायाच्च । न हि स्तुत्यर्थारोपितरूपे णैव विधिवाक्येऽप्यनुवाद इति युज्यते । यत्तु पुरुषसूक्तादिकमनन्यपरमित्युक्तं, तत्र पुरुषसूक्तस्य तावच्छिवपरतया व्यवस्थापितत्वादस्मदनुकूलमेवानन्यपरत्वम् । किंतु 'उपाकृता दक्षिणतोऽवस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन परा चानुशंसती'ति पुरुषमेधे तस्य कात्स्न्येनाप्रगीतमन्त्रसाध्यस्तुतिवाचिशंसनश- ब्देन स्तुतौ विनियोजनात् । विष्णुपुराणे 'तुष्टाव प्रणतो भूत्वा भूतधा- तारमच्युतम् ।' इत्युपक्रम्य 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् । स- र्वव्यापि भुवस्स्पर्शादत्यतिष्ठद्दशांगुल'मित्यादिना पुरुषसूक्तप्रक्रियया स्तुतिप्रकारो- पवर्णनात् , छान्दोग्येऽपि 'तदेतदृचाभ्यनूक्त'मित्यत्रान्वित्युपसर्गेण पुरुषसूक्तम- न्त्रस्य तदुक्तार्थानुवादत्वस्यैव द्योतनाच्च स्तुतिपरत्वमनुवादरूपत्वं चावर्जनी- यमिति परेषां तदनन्यपरत्वनिर्धारणमेवासङ्गतम् । 'तद्विष्णोः परमं पदमि'ति काठकवचनस्य त्वनन्यपरत्वमस्माभिरपीष्यत एव । किं तु तत्र पदशब्दस्य 'तत्ते पदं सङ्ग्रहेण ब्रवीमी'त्युपक्रमानुरोधेन सर्ववेदप्रतिपाद्यत्वादिविशिष्टे ब्रह्मणि वृत्तेः परेषामपि सम्मतत्वेन 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति मन्त्र इव स्थानविशेषपरत्वायोगेन विष्णुशब्दस्य पञ्चम्यन्तत्वे षष्ठ्यन्तत्वे वा पदशब्दोदि- तस्य ब्रह्मणो विष्णवतिरेकस्यैव स्वरसतः प्रतीतेः विष्णोः पदमिति राहोश्शिरइति वदौपचारिकभेदव्यपदेश इति विष्णुशब्दस्यापि प्रतिपिपादयिषिते ब्रह्मणि वृत्त्यभ्यु- पगमेऽपि तस्याथर्वशिखयां 'व्यापनाद्व्यापी महादेव' इत्यन्ते महादेवनामावलिनिर्वच- नप्रकरणे 'सर्वे देवास्संविशन्तीति विष्णु'रिति, लिङ्गपुराणे–'भगवान् भगसद्भावान्नि- र्मलत्वाच्छिवस्स्मृतः । स्वामी स्वमस्य यत् सर्वं विष्णुस्सर्वप्रवेशनात् ।' इति, वा युसंहितायां—'शिवतत्त्वादिभूम्यन्तं शरीरादि घटादि च । व्याप्याधितिष्ठति शि वस्तस्मात् विष्णुरुदाहृतः ।' इति, शिवनामत्वेन निर्वचनदर्शनात् नारायणैकान्त्या सिद्धेः, तदैकान्त्येऽपि प्राग्दर्शितैर्न्यायैर्मन्त्रोपनिषदि जगत्कारणब्रह्मपरहरशब्दवत्त स्यानन्यथासिद्ध्यभावेन तदनुरोधिवृत्त्यन्तरसहिष्णुत्वाच्च न तत्र परेषां प्रत्या- शावकाशः । एतेन 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुत्युदाहरणमपि निरस्तम् । 'ब्र- ह्मविदाप्नोति परमि'त्युक्ते किं तत् ब्रह्मेति जिज्ञासायां तत्स्वरूपलक्षणपरे ऽस्मिन्वाक्ये सत्यादिशब्दवदनन्तशब्दस्यापि प्रथमान्ततया नपुंसकलिङ्गत्वेन वि ष्णुवाचित्वासम्भवाच्च 'अनन्तो नागराड्विष्णुरनन्तं खनिरन्तरयोरि'ति पुल्लि- ङ्गस्यैव तद्वाचित्वानुशासनात् । न च 'यो वेद निहितं गुहायामि'ति अनन्तरवाक्योक्तवेदनस्य कर्मसाकाङ्क्षत्वात् द्वितीयान्ता एव सत्यादिशब्दा

इति वाच्यम् । तत्रैव गुहायां निहितमित्यस्य सन्निहितत्वात् ब्रह्मवचनस्य कर्मसमर्पणपरस्य सत्त्वेन तदनुरोधात् सत्यादिवाक्यस्य बुभुत्सिततलक्षणपरत्वभङ्गायोगादिति दिक् तस्मात् परोक्तरीत्या श्रुतीनां बलाबलविभागायोगादस्मदुपपादितैर्न्यायैश्शिवपरश्रुतीनां प्राबल्यमिति स्थितम् ॥४६॥ इति विष्णुपरश्रुत्यादीनां प्राबल्यनिरसः ।

निरस्तः श्रुतीनां पराभिमतो बलाबलविभागः अथ पुराणानां सात्त्विकादिविभागकल्पनामूलस्स निराक्रियते— एवं तावत् परे कल्पयन्ति —**कल्पेषु कषुचित् ब्रह्मा सत्त्वोद्रिक्तः प्रबुध्यते ॥ रजसा केषुचिद्व्यस्तस्तमोग्रस्तश्च केषुचित्। ते च कल्पास्ततो हेतोस्तदेकैकादिनात्मकाः। सात्त्विकादिसमाख्याभिराख्यायन्ते महर्षिभिः ॥ तत्क्रमेण च कल्पेषु सात्त्विकादिषु पद्मभूः ॥ वैष्णवब्राह्मशैवानि पुराणानि विनिर्ममे । तत एव पुराणानां सात्त्विकादिव्यवस्थितिः । बलाबलविभागश्च तेषां वक्तृगुणोचितः।'** इति । इत्थंकल्पनायां च मात्स्यपुराणवचनं मूलं सङ्गिरन्ते । तत्र हि 'सङ्कीर्णास्सात्त्विकाश्चैवे'त्यादिना कल्पानां सङ्कीर्णसात्त्विकराजसतामसभेदेन चातुर्विध्यं प्रदर्श्य 'यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ।' इति तत्तत्पुराणानां तत्तत्कल्पे ब्रह्मविनिर्मितत्वं चोक्त्वा पठितम्—अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥ सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥' इति । अत्र कल्पानां राजसादिविभागः । तथाविभागश्च तत्तत्कल्पेषु ब्रह्मणस्तत्तद्गुणप्रादुर्भावादेव । तत्तत्कल्पेषु तेन प्रणीतानां पुराणानां परस्परविरुद्धतत्तद्देवतोत्कर्षापकर्षप्रख्यापनपराणां कार्त्स्न्येन प्रामाण्यायोगे सति तेषु हेयोपादेयविशेषपरिज्ञानाय वक्तृगुणानुगुणबलाबलसूचनार्थत्वेन सप्रयोजनत्वात् प्रकारान्तरेण राजसादिविभागस्य निष्प्रयोजनत्वात्, अतस्तेषां प्रमाणाप्रमाणव्यवस्थानुकूलवक्तृगुणदोषोद्घाटनपर्यवसायित्वावसायाच्च । तथाच कल्पानां राजसादिविभागेन पुराणानां तत्तत्कल्पेषु ब्रह्मप्रोक्तत्वोपवर्णनेन च सामान्यतः पुराणानां वक्तृगुणानुगुणबलाबलविभागे सूचिते किंदेवतापरं पुराणं किंगुणकेन ब्रह्मणा प्रोक्तमिति विशिष्य जिज्ञासायां 'अग्नेश्शिवस्य माहात्म्यमि'त्यादिकेन च तमोनिरुद्धतत्त्वावबोधकेन निर्मितत्वात् तामसानि शैवपुराणान्यप्रमाणत्वेन ख्यापितानि । नन्वनेकेषामप्रामाण्यमापादयदिदमेव वचनं तैर्बाध्यं किं न स्यात्, भूयसां बलीयस्त्वात् ब्रह्मणस्तमोवश्यत्वे पुराणानां च कथं

चित्तदवस्थायां तेन निर्मितत्वेन तामसत्वे इदमेव वचनं तामसं किं न स्यात्, उच्यते—नैतद्वचनविरोधात्तेषां बाधः । किं तु परस्परविरोधादेव कृत्स्नपुराणानामर्थनिर्णायकत्वशक्तिविरहे सति किं तानि कार्त्स्न्येन त्याज्यानि, उत कानिचित्स्वीकार्याणीत्यपेक्षायां सत्त्वादिमूलत्वलक्षणवैषम्यपरमिदं वचनम् । अतो न भूयसां बलीयस्तयास्य वचनस्य बाधः । उदाहृतवचनस्य चापवादकाभावात्, 'यो ह खलु वा वास्ये'त्यादिमैत्रायणीयश्रुत्या तत्तद्गुणत्वेनाभिहितस्य तत्तद्देवताविशेषस्य प्रतिपादकानां प्रबन्धानां तत्तद्गुणमूलत्वस्य औचित्यरूपेण वस्तुसामर्थ्येन स्वतस्सिद्धस्य प्रामाण्यस्य स्थिरीकरणाच्च नाप्रामाण्यहेतुभूततमोमूलत्वशङ्कापीति । अत्रोदाहृतमात्स्यवचनजातस्य सर्वपुराणानामविरोधेन प्रामाण्योपपादनपरत्वव्यवस्थापनाय तद्विरोधादेव तावत् परमशिवसंहाररुद्रविवेकावधारणशून्यानां परेषामयमयुक्तश्शैवपुराणानामप्रामाण्याभिमान इति स्ववाग्वज्रेणैव वृत्रवत् परेषामभिहतिमभिप्रेत्याह—

यदन्योन्याधिक्यं विधिहरिहराणां विदधतां
पुराणानां मात्स्यं गतिमभिदधौ कल्पभिदया ।
तदप्रामाण्यं त्वन्महिमवचसां वक्ति वच इ-
त्यसभ्यानस्थाने मुखरयति मोहः पशुपते ॥४७॥

अयं भावः— उदाहृतवचनजातं ब्रह्मविष्णुरुद्राणां परस्परस्मादुत्कर्षं विभावयतां पुराणानां भिन्नाभिन्नकल्पवृत्तान्तविषयत्वप्रदर्शनेनाविरोधेन सर्वपुराणप्रामाण्योपपादनपरं, न तु केषांचिदप्रामाण्यापादनपरम् । तथा हि—यथा ग्रीष्महेमन्तादीनाम् उष्णागममहिमागमानामुष्णत्वादिव्यपदेशः तत्तत्कालेषूष्णतुहिनाद्युत्कर्षात् । यथा च पुरुषाणां सात्त्विकादिव्यपदेशः तत्तत्पुरुषेषु सत्त्वादिगुणोत्कर्षात्, एवं 'सङ्कीर्णास्सात्त्विका' इत्यादिश्लोकेन कल्पानां सात्त्विकादिविभागस्तत्तत्कालेषु परमशिवाज्ञाबलात् सत्त्वाद्युत्कर्षादेव, न तु तत्तत्कल्पावस्थायिनो ब्रह्मणस्तत्तद्गुणोत्कर्षात्, तत्र तथा कण्ठोक्त्यभावात् । प्रयोजनानुरोधात् तथाविभागाभिप्रायः कल्प्यत इत्यप्ययुक्तम् । मात्स्य एव 'पुराणसङ्ख्यामाचक्ष्व सूत विस्तरतः क्रमात् । दानधर्मविशेषं च यथावदनुपूर्वशः' इति प्रश्नोत्तरे सर्वपुराणानामदृष्टार्थदानविधिप्रपञ्चनं 'पुराणं मानवो धर्मस्साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥' इत्यादिपुराणमात्रप्रामाण्यस्मरणम् अविगीतमहाजनपरिगृहीतत्वं चानादृत्य केषांचित्पुराणानां भ्रान्तिमूलत्वकल्पनस्य परेषां वैदिकमार्गप्रद्वेषमात्रविजृम्भितस्य प्रयोजनवत्त्वस्यैवायोगात् परमते शैवपुराणानां प्रधानस्य भूयसश्चार्थस्य बाधेन सर्वथैवाप्रामाण्यस्यावर्जनीयत्वात् अस्मदुक्तरीत्या सात्त्विका-

१. प्रामाणिकस्य इति पाठान्तरम् ।

दिकल्पविभागस्य औत्सर्गिकसकलवैदिकसम्मतनिखिलपुराणप्रामाण्योपपादनेन तत्रैव 'तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्।' इति सात्त्विककल्पवाक्यशेषात्. कौर्मे सात्त्विककल्पान् प्रस्तुत्य 'ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः। आराध्य मां च गिरिशं यान्ति तत्परमं पदम्।' इति वचनाच्च, तपश्चरणादीनामुत्कृष्टापकृष्टकालप्रदर्शनेन च सप्रयोजनत्वाच्च। न च 'यस्मिन् कल्पे तु यत्प्रोक्तमि'त्यनन्तरश्लोकः पुराणानां तत्तत्कल्पेषु ब्रह्मप्रणीतत्वविधिपरः। किं तु तत्तत्कल्पेषु ब्रह्मणा प्रणीतानि परस्परविरुद्धदेवतोत्कर्षप्रख्यापनपराणि पुराणान्यनूद्य तेषां तत्तत्कल्पविशेषप्रवृद्धदेवताविशेषमहिमवर्णनात्मकत्वविधिपरः। 'तद्रूपमेवकारश्च स्यादुपादेयलक्षणम्।' इत्यभियुक्तोक्तेः। यद्यपि तत्र श्लोके 'तस्यतस्य तु माहात्म्यमि'ति तत्तत्कल्पमाहात्म्यवर्णनमात्रविधिरेव प्रतीयते, तथापि पुराणानां स्वरूपेण कल्पमाहात्म्यवर्णनार्थमप्रवृत्तेः तेषु देवताविशेषमाहात्म्यवर्णनस्यैवोपलम्भात्, 'अग्नेः शिवस्य माहात्म्यमि'ति अनन्तरसन्दर्भानुरोधाच्च वर्षादिवर्णनं तत्कालप्रवृद्धवृष्ट्यादिप्रचुरितकुसुमफलपल्लवादिपरिष्कृततरुलतादिवर्णन इव तत्तत्कल्पमाहात्म्यवर्णनपरत्वविधिस्तत्तत्कालोद्रिक्तगुणानुगुणदेवतामाहात्म्यवर्णनात्मत्वविधावेव पर्यवस्यति। एवं चानन्तरश्लोके प्रतिपाद्यमानोऽर्थः परमत एव न सङ्गच्छेत इति तत्सङ्गत्यनुरोधादपि सात्त्विकादिविभागोऽस्मदुक्तरीत्यैवास्थेयः। ननु, यथानन्तरश्लोकविधेयार्थस्वारस्यात् सात्त्विकादिविभागः पुराणानां कात्स्न्र्येन प्रामाण्योपपादनप्रयोजनः प्रतीयते, तथा तदनुवाद्यार्थस्वारस्यात् तेषां प्रमाणाप्रमाणविवेकार्थस्स इत्यपि प्रतीयत इति चेत्, प्रतीयताम्। तथापि सति विरोधे विधेयार्थस्वारस्येनैवार्थनिर्णयो युक्तः, नानुवाद्यस्वारस्यानुरोधात्। विधेयस्य तात्पर्यगोचरत्वेन प्रबलत्वात्। अत एव जातकर्ममरणेष्टिवाक्ययोर्जननमरणानुरूपनिमित्तानुवादस्वारस्यात् पुरुषस्य देहतुल्यकालत्वप्रतीतावपि उदर्कोपयोगिजातकर्ममरणेष्टिरूपकर्मविधिसामर्थ्यसिद्धस्य पुरुषस्य देहान्तरानुयायित्वस्यावश्यम्भावात् तस्य जननमरणानुवादो देहोपाधिना भाक्त इति सिद्धान्तितं भगवत्पादैः 'चराचरव्यपाश्रयस्तु स्यादि'त्यधिकरणे। वस्तुतस्तु तत्तत्कल्पविशेषेषु पुराणानि ब्रह्मणा न प्रणीतानि, किन्तु सर्गाद्यकृतयुगे वेदप्रवर्तनसमये अविभक्तपाद्मादिप्रभेदोऽयं पुराणस्कन्धः शतकोटिप्रविस्तरः युगपदेव तेन प्रणीतः, तस्यैव पुनस्त्रेतायां ब्रह्मादिभिरष्टादशभिः ऋषिभिरष्टादशधा विभज्य ग्रन्थकोट्या संक्षेपः कृतः। तस्यैव पुनर्द्वापरान्ते चतुर्लक्ष्या वेदव्यासेन संक्षेपः कृतः। मात्स्य एव 'पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः। पुराणमेकमेवासीत् शतकोटिप्रविस्तरम्।'

इत्यारभ्य 'तदर्थोऽत्र चतुर्लक्षैस्संक्षेपेण निवेशितः ।' इत्यन्तेन तथाप्रतिपादनात्, धर्मसंहितायामपि 'ब्राह्ममेव कृते चाद्ये पुराणं धर्मसंहितम् । अष्टादशविधं तच्च कृतं कोटिप्रभेदतः ॥' इत्यादिना तथाप्रतिपादनाच्च । तथा च तदनुरोधात् 'यस्मिन् कल्प' इति वचनं कल्पभेदेषु पुराणविशेषाणां प्रवचनमात्रपरं, न प्रणयनपरम् । 'तेन प्रोक्तमि'ति पाणिनिसूत्र इव प्रोक्तपदेन प्रवचनमात्रसमर्पणादिति नानुवादस्वारस्यादपि सात्त्विकादिविभागः पराभिमतप्रयोजन इति प्रतीयते । अन्ये तु सर्गाद्यकृतयुगेऽपि ब्रह्मणा पुराणस्कन्धो न प्रणीतः, किन्तु तदानीं वेदैस्सह परमेश्वरात् गृहीत्वा तेन प्रवर्तितः, 'यो वै वेदांश्च प्रहिणोति तस्मै' इति चशब्देन पुराणस्कन्धस्य समुच्चयात्, 'तस्मै वेदान् पुराणानि दत्तवानग्रजन्मने' इति तदुपबृंहणदर्शनात्, 'अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वणवेद इतिहासपुराणमि'त्यादिश्रुत्या 'अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् । आदिकर्ता कविस्साक्षात् शूलपाणिरिति श्रुतिरि'ति तदुपबृंहणेन 'भूयस्स भगवान् ध्यात्वा चिरं शूलवरायुधः ॥ असृजत्सर्वशास्त्राणि महादेवो महेश्वरः' इत्यादिना 'इत्येताश्शङ्करप्रोक्ता विद्याश्शब्दार्थसंयुताः ।' इत्यन्तेन राजधर्मवचनेन सर्वविद्यास्थानानामपि परमेश्वरकर्तृकत्वप्रतिपादनाच्चेति वदन्ति । तत्पक्षे तु न कथंचिदपि कृतचोद्यावकाशः । तस्मात्तत्तद्गुणोत्कर्षकालत्वेन कल्पानां सात्त्विकादिविभागपरः सङ्कीर्णास्सात्त्विका इत्यादिश्लोकः । 'यस्मिन् कल्पे त्वि'त्यादिश्लोकस्तु पुराणानां तत्तद्गुणोत्कर्षप्रचुरितकल्पभेदप्रवृत्ततत्तद्देवतामाहात्म्यवर्णनपरत्वेन 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानितान्येव तथाभावा युगादिषु ॥' इत्यादिपौराणिकश्लोकवदविरोधप्रदर्शनपर इत्येव युक्तम् । एवं प्रदर्शितमविरोधं सत्त्वाद्युत्कर्षसमयेषु तत्तदुपाधिगुणमूर्त्युत्कर्षस्य औचित्यरूपेण वस्तुसामर्थ्येन उपपादयितुं देवतान्तराणामपि केषांचित् कल्पभेदेषूचितोत्कर्षप्रयोजकमुपाधिविशेषं च दर्शयितुम् 'अग्नेश्शिवस्य माहात्म्यमि'त्यादि, न तु परोक्तरीत्या किंगुणकेन ब्रह्मणा प्रोक्तं पुराणं किंदेवतापरमिति जिज्ञासायां तद्विशेषं कथयितुम् । 'सात्त्विकेष्वथ कल्पेष्वि'त्यत्र कल्पग्रहणेन सात्त्विकादिशब्दानां कल्पपरत्वेन पुराणपरत्वाभावात् । कल्पविशेषेषु च 'माहात्म्यमधिकं हरेरि'ति स्वतस्सम्भविन एव माहात्म्याधिक्यस्य प्रतिपादनान्निराकाङ्क्षवाक्ये 'निगद्यत' इत्यादिपूर्ववाक्यश्रुतक्रियानुषङ्गकल्पनायोगात् पूर्ववाक्येषु 'प्रकीर्त्यते विद्भिर्निगद्यत' इति क्रियाश्रवणेन तामसकल्पे असन्नप्यग्नेरुत्कर्षः कीर्त्यते परमित्यादिक्रमेण पूर्ववाक्यानां कथञ्चिन्नेतुं शक्यत्वेऽपि 'सात्त्विकेष्वथ कल्पेषु

माहात्म्यमधिकं हरेरि'ति हरेरुत्कर्षस्य कल्पविशेषे व्यवस्थाप्रतिपादनप्रदर्शनेन पूर्ववाक्यानामपि देवताविशेषमहिम्नां कल्पविशेषव्यवस्थाप्रतिपादनपरत्वावसायात्, 'असङ्ख्यातास्स्मृताः कल्पाः ब्रह्मविष्णुशिवात्मकाः । कथिताश्च पुराणेषु मुनिभिः कालचिन्तकैः । सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तामसेषु महेशस्य राजसेषु प्रजापतेः ।' इति कौर्मे, 'क्वचित् ब्रह्मा क्वचिद्रुद्रः क्वचिद्विष्णुः प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानितानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।' इति वायुसंहितायां च स्फुटमेव कल्पभेदेन ब्रह्मादीनामुत्कर्षापकर्षप्रतिपादनाच्च । तस्मात्परोदाहृतमात्स्यवचनैरेव सर्वपुराणानां प्रामाण्यव्यवस्थापनात् तद्विरोधादेव न युक्तः परेषां केषांचित् पुराणानामप्रामाण्याभिमानः । किंच तेषां परोक्तार्थपरत्वेऽपि शैवपुराणादीनां तमोगुणाद्युपाधिकब्रह्मप्रणीतत्वमात्रं सिध्येत्, न त्वप्रामाण्यं केषांचित् । 'ज्ञानमप्रतिमं[1] यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ।' इति ब्रह्मणोऽव्याहतज्ञानशक्तिकत्वस्य स्मरणात् ब्रह्मणः पुराणविशेषप्रणयनोपाधिभूतस्यापि तमसः परब्रह्मणः संहर्तृत्वोपाधिभूतस्येव तत्त्वज्ञानप्रतिबन्धकत्वायोगात् प्रयोगमूलज्ञानमदूषयतश्च प्रयोगाप्रामाण्यानापादकत्वात् । यदि च ब्रह्माप्यस्मदादिवत् तमःप्रतिबद्धतत्त्वज्ञान इति तत्कृतपुराणेषु कानिचिदप्रमाणानि स्युः, तदोदाहृतमात्स्यवचनेष्वपि तथात्वशङ्काया दुर्निवारत्वात् कथं तैः किञ्चिदर्थव्यवस्थासिद्धिः । यत्त्वपवादकवचनादर्शनात् तेषामौत्सर्गिकप्रामाण्यानपाय इति, तदप्ययुक्तम् । 'एकत्र तु पुराणानि सेतिहासानि कृत्स्नशः । एकत्र वेदः परमः एतदेवातिरिच्यते । धर्मनैपुण्यकामानां ज्ञाननैपुण्यकामिनाम् । इदं पुराणं मुक्त्वैकं नास्त्यन्यत्साधनं परम् ।' इत्यादिकौर्मपठिततत्तत्पुराणोत्कर्षप्रतिपादकानेकापवादकश्रवणात्। यदपि वस्तुसामर्थ्येनौचित्यलक्षणेनाप्रामाण्यमेषां स्थिरीकृतमिति, तदपि तुच्छम् । भारतादिष्वसुरादिवृत्तान्तं वर्णयतोऽपि व्यासस्य सात्त्विकत्वेन प्रतिपाद्यगुणानुरोधेन वक्तृगुण इत्यौचित्यस्यासिद्धेः । न च तामसत्वेनापकर्षयोग्यस्य उत्कर्षं वर्णयतः तामसत्वमुचितम् इत्येवमादिक्रमेण औचित्यं विवक्षितमि'ति वाच्यम् । संहाररुद्रस्यापि लोकसंहारार्थं तमःपरिग्रहस्यापकर्षहेतुत्वासम्भवात् । यथा चैतत, तथा गुणमूर्तीनां साम्यव्यवस्थापनस्थले प्रतिपादयिष्यते । एतेन वैष्णवनारदीयगारुडभागवतपाद्मवाराहपुराणानि सात्त्विकानि, ब्राह्मब्रह्माण्डब्रह्मकैवर्तमार्कण्डेयभविष्यद्वामनपुराणानि राजसानि, लैङ्गशैवाग्नेयस्कान्दकौर्ममात्स्यानि तामसानि । अतस्तामसैः लैङ्गा-

1. ज्ञानमप्रतिघमिति पाठान्तरम् ।

दिभिरुक्तं न ग्राह्यमिति केषांचिदर्वाचीनानां स्वदेशिकाभिप्रायविरुद्धसात्त्विकादिविभागोऽपि प्रत्याख्यातः । तस्य सत्त्वाद्युद्रिक्तवक्तृकत्वादिविषयत्वासिद्धेः सत्त्वादिगुणकदेवतापरत्वविषयत्वेऽस्माकं हान्यभावात्, सात्त्विकत्वेनाभिमते गारुडे शिवरहस्ये पाद्मे शिवराघवसंवादाद्यनेकप्रदेशेषु च लैङ्गादिभ्योऽप्यधिकशिवोत्कर्षव्यवस्थापनदर्शनेनानेन विभागेन परदुराशानिर्वहणायोगाच्च । यत्तु पुलस्त्यवरदानलब्धदेवतापारमार्थ्यवेदनेन पराशरेणोपादिष्टत्वात् जगत्कारणवस्तुविषयसामान्यप्रश्ने 'विष्णोस्सकाशादुद्भूतं जगदेतच्चराचरम् ॥' इत्याद्युत्तरक्रमेणावतीर्णत्वेन देवताविशेषमहिमविषयप्रश्नोत्तरसन्दर्भरूपपुराणान्तरवत् 'न बुद्धिभेदं जनयेदि'ति न्यायेन प्रष्टुरभिमतार्थो बहूकृत इति नेतुमशक्यतयानन्यथासिद्धत्वाच्च विष्णुपुराणं सर्वपुराणेभ्यः प्रबलमिति परे कल्पयन्ति, तन्निराकरणमतिक्षोदीय इत्युपेक्षितम् । न हि पराशरादप्युत्कृष्टज्ञानशक्तिभिः ब्रह्मविष्णुरुद्रैः 'अनाद्यन्तं परं ब्रह्म न वेदा नर्षयो विदुः । एकस्तद्वेद भगवानादित्यो ज्योतिषां पतिः ॥' इत्यादिवचनप्रतिपन्नपरतत्त्वावबोधैरादित्यादिभिश्च पराशरेणापि च कृताश्शैवपुराणेषु शिवस्य तत्रतत्र परभावोपदेशा न दृश्यन्ते । न वा वायुसंहितादिषु परतत्त्वसामान्यप्रश्ने शिव एव परतत्त्वमिति निर्धारणरूपोत्तरक्रमेण अवतारणानि नोपलभ्यन्ते । इयांस्तु विशेषः—विष्णुपुराणे प्रष्टुरेकस्य प्रागेव शिष्यभूतस्य परिचितहृदयेन गुरुणा सामान्यप्रश्नेऽपि तदीयपूर्वसिद्धभक्तिवर्धनाय तदनुकूलविशेषविषयमुत्तरमुक्तमिति शक्यं वक्तुम् । वायुसंहितायां तु परस्परं विवदमानानामनेकेषामृषीणां प्रश्ने प्रवृत्तमुत्तरं न तथा नेतुं शक्यमिति । तस्मात् पुराणानां नैवं बलाबलविभागो युक्त इति तत्रतत्रास्माभिरुद्भावितैर्न्यायैः शिवपुराणान्येव बलवत्तराणीति स्थितम् । एतेन शिवागमानामप्रामाण्यप्रलापोऽपि मूर्खाणां गलहस्तितः । प्रमाणमूर्धन्येषु शैवपुराणेषु बहुधा तेषां बहूकरणात् कण्ठोक्त्या केषुचित् प्रामाण्यव्यवस्थापनाच्च । स्यादेतत्—महाभारते 'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥' इति वचनात् पाशुपतागमानां साङ्ख्ययोगादिवत् वैदिकप्रस्थानात् प्रस्थानान्तरत्वं प्रतिपन्नम् । तथाभूतानां च तेषां ब्रह्ममीमांसायां तर्कपादे सह साङ्ख्ययोगपाञ्चरात्रैः प्रामाण्यं निराकृतम् । कूर्मपुराणे— 'एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥' इति । 'बुद्धश्रावकनिर्गन्थाः पाञ्चरात्रविदो जनाः । कापालिकाः पाशुपताः पाषण्डा येच

१. निर्बद्धा इति पाठान्तरम् ।

तद्विधाः ॥ यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तत् भवेच्छ्राद्धं प्रेत्येह च न तत्फलम् । वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः ॥ भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ।' इति च तेषां सह शाक्तपाञ्चरात्रादिभिर्मोहशास्त्रत्वमाविष्कृतम् । अतः कथं तेषां प्रामाण्यं सङ्गच्छत इति, उच्यते—द्विविधस्तावत् पाशुपतागमः--श्रौतः, अश्रौतश्च । कौर्मे एव 'निर्मितं हि मया पूर्वं श्रौतं पाशुपतं शुभम् । गुह्यात् गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥' इत्यारभ्य 'एष पाशुपतो योगस्सेवनीयो मुमुक्षुभिः । भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतिः ।' इत्यन्तेन श्रौतपाशुपतस्य, तदनन्तरम्— 'अन्यानि चैव शास्त्राणि लोकेऽस्मिन् मोहनाय वै ॥ वेदवादविरुद्धानि मयैव कथितानि तु । वामं पाशुपतं सोमं लागुडं चैव भैरवम् ॥ न सेव्यमेतत् कथितं वेदबाह्यं तथेतरत् ॥' इत्यश्रौतपाशुपतस्य च शिवेन विविच्य प्रदर्शनात्, वायुसंहितायां च 'शैवागमोऽपि द्विविधश्श्रौतोऽश्रौतश्च संस्मृतः ॥ श्रुतिसारमयः श्रौतस्स्वतन्त्र इतरो मतः । स्वतन्त्रो दशधा पूर्वमि'त्यारभ्य 'श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः । परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥' इत्यन्तेन श्रौताश्रौतविभागस्य स्पष्टं प्रतिपादनात् । एवंच यानि पाशुपतागमप्रवेशनिन्दावचनानि, तानि वैदिकवर्त्माधिकृतानामश्रौतागमप्रवेशविषयाणि । 'न सेव्यमेतत् कथितं वेदबाह्यं तथेतरत् ।' इति वचनैकार्थ्यात् । यच्च भारतवचनमुदाहृतं, तदप्यश्रौतपाशुपतविषयम् । श्रौतपाशुपतस्याथर्वशिरःकालाग्निरुद्रोपनिषदाद्युपदिष्टपाशुपतशाम्भवादिसंज्ञकपरमवैदिकव्रतप्रपञ्चैदम्पर्येण प्रवृत्तस्य वैदिकमार्गात् भिन्नमतत्वाभावात् । यच्च 'पत्युरसामञ्जस्यादि'त्यत्र पाशुपतप्रामाण्यनिराकरणं, तदप्यश्रौतपाशुपतविषयम् । ईश्वरस्य केवलनिमित्तत्ववादः खलु तत्र निराकृतः । स च तत्रैव प्रसिद्धः, न तु श्रौतपाशुपते । वायुसंहितायां श्रौतपाशुपतार्थसंग्रहे—'शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ।' इत्युपादानत्वस्यापि प्रतिपादनात् कटकमकुटादीनां सुवर्णोपादानकत्वेन सौवर्णत्वव्यपदेशवत् सर्वेषामपि भावानां भवोपादानकत्वेन भावत्वव्यपदेश इति शैवशास्त्राभियुक्तप्रसिद्धेश्च । तस्माद्वेदान्तरहस्यार्थनिष्कर्षरूपत्वात् 'पुराणं तर्कशास्त्रं च छन्दोऽलङ्कारलक्षणम् । वेदमीमांसिकां दत्वा शिवधर्मं च वै नृप ।' इति, 'सप्तद्वीपपृथिव्यास्तु राजराजो भवेत्तु सः ।' इति वाराहपुराणादिषु तद्दानप्रशंसनात्' योगयाज्ञवल्क्यादिषु—'स एव मुक्त इत्युक्तस्तान्त्रिकेष्वपि शिक्षितैः ।' इत्यादिना स्वोपदिष्टार्थसंवादित्वेन बहुशो ग्रहणाच्च प्रमाणमूर्धन्यानि श्रौतानि पाशुपततन्त्राणीति निरवद्यम् । न चाश्रौतपाशुपतादीनामपि सर्वथाऽप्रामाण्यम् । 'साङ्ख्यं यो-

गः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ।' इति भारतवचनेन शिवकेशवादिप्रणीतानां स्वतन्त्रागमानामपि वेदवत् प्रामाण्यव्यवस्थापनात्, क्वचिद्वैदिकमार्गविरुद्धे वामाचारतप्तमुद्राङ्कनाद्यनुष्ठेयांशे 'स्वतन्त्रा ह्यागमास्सर्वे निर्मूलैः परिकीर्तिताः । अधिकारिविशेषेण प्रवृत्ता न हि संशयः ।' इत्यादिमानवपुराणोक्तरीत्या अधिकारिविशेषविषयत्वस्य, तादृशतटस्थेश्वरजीवोत्पत्त्यादिवस्त्वंशे 'ब्रह्मविष्णुमहादेवप्रमुखैः परिकीर्तिताः । आगमाश्चानया नेया दिशा नैवान्यथा बुधाः । अन्यथा ते तु नेयाश्चेद्विरुद्धास्स्युर्न संशयः ॥' इत्यादिमानवपुराणोक्तरीत्या श्रुत्यविरुद्धार्थे कथंचित्तात्पर्यस्य, तावन्मात्रे उदाहृतोदाहरिष्यमाणकौर्मवचनोक्तरीत्या तामसजनव्यामोहनार्थविप्रलम्भमूलत्वस्य वा कल्पनया सर्वथा अप्रामाण्यवारणेन प्रामाण्यव्यवस्थापनसम्भवे महापुरुषप्रणीतानां तेषां सर्वथैवाप्रामाण्यकल्पनायोगाच्च, भागवते अक्रूरस्तोत्रे 'त्रय्या च विद्यया केचित्' इत्युपक्रम्य 'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् । बह्वाचार्यविभेदेन भगवन् समुपासते ॥' इत्यादिना तेषामधिकारिविभेदेन प्रामाण्यविभावनाच्च । स्वतन्त्रागमोदितेष्वाचारेषु केऽधिक्रियन्त इति चेत्, उच्यते—**शापाद्वा गौतमादीनां पापाद्वा महतो नराः । ये गता वेदबाह्यत्वं ये च सङ्कीर्णयोनिजाः । तेऽधिक्रियन्ते तन्त्रेषु स्त्रीशूद्राश्च यथायथम् । अनुग्रहार्थमेतेषामागमा निर्मिताः पुरा ॥** तथाहि—तत्र तावन्महापुरुषशापपापादितवैदिकमार्गबहिर्भावानां तन्त्राधिकारः कौर्मे—'स तेषां मायया जातं गोवधं गौतमो मुनिः । केनापि हेतुना ज्ञात्वा शशापातीव कोपनः । भविष्यथ त्रयीबाह्या महापातकिभिस्समाः ॥' इत्यादिना गौतमशप्तान् प्रस्तुत्य 'सर्वे सम्प्राप्य देवेशं शङ्करं विष्णुमव्ययम् । अस्तुवन् लौकिकैस्स्तोत्रैः उच्छिष्टा इव सेवकाः ।' इत्यादिना शिवकेशवसन्निधौ तेषां गतिप्रार्थनां प्रदर्श्य 'तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् । विमोहनाय शास्त्राणि करिष्यावो वृषध्वज । एवं संचोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥' इत्यादिना तेषां कथञ्चित् गतिप्राप्तये ताभ्यां पाशुपतपाञ्चरात्रादयः प्रणीता इतिवर्णनेन दर्शितः । अत्र प्रागुक्तरीत्या क्वचित्क्वचिदंशे विप्रलम्भमूलत्वमप्यस्तीति पापिनां विमोहनायेति मोहशास्त्रत्वोक्तिः । दुष्करप्रायश्चित्तपापपादितवैदिकमार्गबहिर्भावानां तन्त्राधिकारस्साम्बपुराणे दर्शितः—'श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः । क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् । धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् । प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् । भयं दुर्बलचित्तानां मरणे जायते भृशम् ॥ तेषामेवाभिरक्षार्थं खल्वहं तन्त्रे-

मुक्तवान् ॥' इति । सङ्कीर्णयोनिजानां तन्त्राधिकारोऽपि कौर्मे दर्शितः 'अथांशात्सात्वतो नाम विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतः धनुर्वेदविदां वरः । स नारदस्य वचनाद्वासुदेवार्चने रतः । शास्त्रं प्रवर्तयामास कुण्डगोलादिभिश्श्रितम् । तस्य नाम्नातु विख्यातं सात्वतं नाम शोभनम् । प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥' इति । शूद्राधिकारो भागवते दशमस्कन्धे दर्शितः – 'तेनोक्तं सात्वतं तन्त्रं यत् ज्ञात्वा मुक्तिभाग्भवेत् । यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवस्स्मृतः । एवं सूतसंहितादिषु च तन्त्राणामधिकारिविशेषप्रतिपादनं द्रष्टव्यम् । यत्तु वासिष्ठलैङ्गे–'मत्तन्त्राश्रयणेनैव मत्पूजा च कृता त्वया । तया न प्रीतवानस्मि तव शाण्डिल्य मे प्रिय ॥ कुमार्गेणापि शाण्डिल्य कृता पूजा मम त्वया । अतः कालेन महता वेदमार्गं गमिष्यसि ॥' इति पाञ्चरात्रदीक्षाप्रविष्टं शाण्डिल्यं प्रति भगवतो निन्दावचनं, तत् चतुर्वेदेषु परं श्रेयो लब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवानिति पाञ्चरात्र एव श्रवणात् सति वैदिकमार्गाधिकारे तं विहायान्यत्र प्रविष्ट इति अनौचित्याभिप्रायं, न तु तदप्रामाण्याभिप्रायम् । 'को वा वर्णाश्रमाचारं श्रौतं त्यक्तुं त्वया विना । शक्तः पापबलात् त्यक्तः नास्ति ते निष्कृतिश्श्रुतौ ॥' इति तत्रैव स्फुटीकरणादित्यलमतिप्रसङ्गेन । एतेनागमेषु पाञ्चरात्रस्य बलीयस्त्वं ब्रुवाणाः प्रत्युक्ताः । उक्तरीत्या वेदार्थसारसंग्रहात्मकानां क्वचिदपि दोषशङ्काकलुषरहितानां शैवागमानामेव सर्वागमेभ्यो बलवत्त्वव्यवस्थितेः । एवं च बहुधोपवर्णितैर्न्यायैः शिवपुराणानामेव श्रुतिस्मृत्यागमानां सर्वतः प्राबल्यस्य वज्रलेपायितत्वेन तैस्तस्यैव सर्वकारणत्वसर्वान्तर्यामित्वादिव्यवस्थितौ तदनुरोधेन देवतान्तरोत्कर्षपराश्श्रुत्यादयो नेयाः, न त्वत्र वैपरीत्यचोद्यावकाश इति सिद्धम् ॥४७॥

॥ इति शिवपुराणशैवागमयोरप्रामाण्यनिरासः ॥

स्यादेतत्, भवतु प्रबलश्रुत्याद्यनुरोधेन 'सर्वं तदिन्द्र ते वश' इत्याद्यर्थवादमात्रस्य स्तावकत्वेनान्यथानयनम् । सुबालोपनिषदादिषु श्रुतिषु गीताविष्णुपुराणादिषु च सृष्टिप्रलयादिप्रकरणेष्वेव नारायणस्य यत् सकलभुवनसर्गप्रलयस्वातन्त्र्यसर्वान्तर्यामित्वादिरूपपरमैश्वर्यप्रातिपादनं, तस्य कथमन्यथानयनं कर्तव्यमिति तत्प्रकारं व्युत्पादयति—

तवैश्वर्यं चक्रिण्यपि तदवतारेष्वपि परं
तदंशत्वेनैक्यात् परमुपदिशन्ति श्रुतिगिरः ।
अमूषामेतावन्मुनिभिरुदितं मर्म भगवन्
अबुध्वैतन्मौढ्यात् भ्रमतमसि मज्जन्ति विवशाः ॥४८॥

१. अबुध्वैके मौढ्यात् भ्रमतमसि मज्जन्ति विविधं इति पाठान्तरम् ॥

अयं भावः—ब्रह्मा विष्णुर्गिरीशश्च श्रीशम्भोरखिलेश्वरात् । न भिद्यन्ते तदंशत्वादवतारा हरेरिव । एवंसत्यवतारस्य कृष्णादेः कीर्तने यथा । तदीयत्वेन कीर्त्यन्ते महाविष्णोर्गुणा अपि । एवं शिवस्य कीर्त्यन्ते तदंशेऽ¹क्यैकताधिया । सर्वकर्तृत्वसर्वान्तर्यामित्वप्रमुखा गुणाः ॥ 'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।' इत्यादयो हि गीतादिपठिताः कृष्णसूक्तयः । तस्मिंस्तेनैव रूपेण न युज्यन्ते कथंचन ॥ तस्मात्तस्य जगन्मूलमूलमूर्त्यैकताधिया । इमास्सूक्तय इत्येव स्वीकर्तव्यं परैरपि । तथा च प्रबलैर्मानैर्जगन्मूले विनिश्चिते। शाम्भवे रूप एवैषां भावविश्रान्तिरिष्यताम् ॥ एवंचसति यत् कौर्मे पुराणे किरिटिनं प्रति 'ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया ॥ स्वयमेव हृषीकेशः प्रीत्योवाच सनातनम् । गच्छगच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि ॥ भजस्व परया भक्त्या शरण्यं शरणं शिवम् ।' इति भगवान् बादरायणो भगवद्गीतायाम् ऐश्वरं ज्ञानमभ्यधात् । यच्च स एव—'नारायणोऽपि भगवान् देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ।' इति ईश्वरगीतान्ते भगवद्गीतां तदर्थग्रथनात्मिकामाचष्ट, यच्च भगवद्गीतासु भगवान् निजमूलरूपप्रदर्शनं प्रार्थयमानं पार्थं प्रति शैवं विश्वात्मकं रूपं प्रादर्शयत्, यदपि 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । अन्तवत्तु फलं तेषां तत् भवत्यल्पमेधसाम् । अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।' इत्यादिवचनान्वितं गीताशास्त्रमान्तं श्रुत्वापि 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ।' इति शास्त्रान्ते गुरुं प्रत्युक्त्वापि पार्थः शिवभक्तिरतो नित्यं यावज्जीवमवर्तत, यदपि भारतयुद्धमध्ये पार्थश्शङ्करायोपकल्पितं नित्यपूजोपहारं वासुदेवे अर्पयित्वा कैलासगिरावधि²शिवमपश्यत्, तदेतत् सर्वं सङ्गच्छततराम् । भगवद्गीतोपवर्णितजगत्कारणत्वादिमहिमजातस्य शिवपर्यवसायित्वे तस्यैश्वरज्ञानत्वस्य ईश्वरगीतार्थग्रथनरूपत्वस्य च यद्रूपाभिप्रायेण जगत्कारणत्वादि वर्णितं, तद्रूपप्रदर्शनप्रार्थने कृष्णस्य शैवरूपप्रदर्शनस्य च शिवपर्यवसितमेव जगत्कारणत्वादिकं वास्तवाभेददृष्ट्या कृष्णेन 'अहं सर्वस्य प्रभव' इत्यादिना स्वकीयत्वेन निर्दिष्टमिति तदभिप्रायनिश्चयेन शिवस्य सर्वोत्कर्षावधारणात् अर्जुनस्य यावज्जीवं तस्मिन् दृढभक्तियोगस्य चाभेदनिश्चयसत्त्वेन शिवबुद्ध्यैव वासुदेवे शिवपूजाद्रव्यार्पणात् तस्य च निजभावानुरोधेन शङ्कराभ्याशे दर्शनेन च सामञ्जस्यस्यातिपस्पष्टत्वात् । तदेवं गीतोपवर्णितस्य परभावस्य शिवपर्यवसायित्वनिश्च-

१. मूर्त्यैक्यपरया धिया इति पाठान्तरम् ॥ २. शिवपार्श्वमिति पाठान्तरम् ॥

ये अनेनैव न्यायेन सुबालोपनिषन्नारायणानुवाकादिश्रुतिषु च वर्णितस्यापि परभावस्य शिवपर्यवसायित्वं द्रष्टव्यम् । निर्णीतं च वैष्णवश्रुतिपुराणादिष्वपि जगत्कारणत्वादिपरभावप्रतिपादनस्य शिवे पर्यवसानं भगवता पराशरेण--'उत्कर्षो यः पुराणेषु वैष्णवेषु तु दृश्यते । असौ तत्त्वात्मना विष्णोर्न स्वरूपेण सत्तमाः ॥ सर्वकारणमीशानः साम्बस्सत्यादिलक्षणः । न विष्णुर्न विरिञ्चश्च न रुद्रो नापरः पुमान् ॥' इति, 'श्रुतयश्च पुराणानि भारतादीनि सत्तम । शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ॥' इति च । एवं सूतसंहितादिष्वपि उक्तेष्वर्थेषु वचनानि द्रष्टव्यानि । सुबालोपनिषदि नारायणस्य महासर्गादिकारित्वोपवर्णनस्य शिवपर्यवसायित्वं तु परोक्तरीत्या तत्प्रापितं सर्गाद्यसमयमनूद्य शिवस्य तत्कालवर्तित्वविधायिना 'यदा तम' इति श्वेताश्वतरमन्त्रेणापि स्फुटीकृतम् । प्रपञ्चितोऽयमर्थः प्रागेव । तदेवमृषिभिरप्यनुमोदितं सुखेनाविरोधनयनमार्गमपश्यतामेवान्यथाकल्पनाविजृम्भणानीति निष्कर्षः । मूलश्लोके श्रुतिगिर इति पुराणादीनामप्युपलक्षणम् ॥४८॥

ननु, न सर्वत्रैवं नारायणस्य जगत्कारणत्वाद्युपवर्णनस्य शिवे पर्यवसानं शक्यते वक्तुम् । महोपनिषदि—'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादिना ब्रह्मेशानादिसर्वेतरव्यवच्छेदेन एकस्यैव नारायणस्य सर्गादौ सद्भावं, ततो भूतेन्द्रियादिप्रपञ्चोत्पत्तिं च प्रतिपाद्य 'अथ पुनरेव नारायणस्सोऽन्यत्कामः मनसा ध्यायतः तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत् ता इमा आपस्तासु तेजो हिरण्मयमण्डमभवत् । तत्र चतुर्मुखोऽजायत' इत्यादिना, 'अथ पुनरेव नारायणस्सोऽन्यत्कामः मनसा ध्यायतस्तस्य ध्यानान्तस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इत्यादिना ब्रह्मशिवयोरपि तत्सृष्टत्वोपवर्णनस्य शिवे पर्यवसानासम्भवात् । न चात्र शिवसृष्ट्युक्तेः संहाररुद्रविषयत्वेनाविरोधान्नारायणस्य स्रष्टृत्वोपवर्णनस्य परमशिवे पर्यवसानं सम्भवतीति वाच्यम् । उपबृंहणविरोधात् । तथा हि—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥ ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ योऽसावतीन्द्रियग्राह्यस्सूक्ष्मोऽव्यक्तस्सनातनः । सर्वभूतमयोऽचिन्त्यस्स एव स्वयमुद्बभौ । सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः ॥' इत्यादिमानववचनमेतच्छ्रुतिमूलकम् । अत्रोदाहृतोपनिषत्प्रक्रिययैव करिष्यमाणनामनिर्वचनसूचितं नारायणं स्वयम्भ्वादिशब्दितं

प्रस्तुत्य तस्य महदादिपरिणतवीर्यत्वोक्त्या प्रथमं भूतेन्द्रियसर्गं सङ्क्षेपेण प्रदर्श्यानन्तरं सृष्टिप्रकाराद्यभिध्यानं स्वशरीरात् सलिलसृष्टिं तन्मध्येऽण्डसृष्टिं तत्र ब्रह्मसृष्टिं चोक्त्वा तन्मुखेभ्यश्चतुर्भ्यस्तत्तद्वस्तुविशेषोत्पत्तिप्रतिपादनदर्शनेन मूलमूलिभावस्य स्पष्टत्वात् । नन्वत्र नारायणनामनिर्वचनं सन्निहितत्वात् जलमध्ये अण्डोत्पन्नत्वेन क्लृप्तावयवशक्तिकत्वाच्च ब्रह्मण्येवान्वेति, न तु स्रष्टरि स्वयम्भुवीति नोदाहृतोपनिषन्मूलत्वं युज्यते । न च सन्निधानात् प्रकरणस्य बलीयस्त्वात् प्रकरणिनि स्रष्टर्येव तदन्वयः, तत्रापि महाजलौघसृष्ट्युक्तिसामर्थ्यसिद्धतन्मध्यनिवाससद्भावात् अवयवार्थक्लृप्तेरिति वाच्यम् । तस्यात्र प्रकरणित्वासिद्धेः, प्राधान्येन तत्प्रतिपिपादयिषायां लिङ्गाद्यदर्शनात् । 'भूतग्रामस्य सर्वस्य ह्युत्पत्तिप्रलयं तथा ।' इति महर्षीणां प्रपञ्चोत्पत्तिप्रलयप्रश्ने हि तन्निरूपणाय 'आसीदिदमि'त्यादि प्रवृत्तं, न तु यतो भूतग्रामस्योत्पत्तिः, यस्मिंश्च प्रलयः, तं स्रष्टारं वदेति प्रश्ने तन्निरूपणाय प्रवृत्तम् । तस्मान्निष्परिपन्थिना सन्निधानेन नारायणनामनिरुक्तेः ब्रह्मण्येवान्वयो युक्तः । तस्यापि पुराणेषु तन्नामप्रसिद्धेः, उच्यते—अपां नारसंज्ञाविधायकेन वाक्येन व्यवधानात् न ब्रह्मणस्सन्निधानमस्ति । किं च 'आपो वै नरसूनव' इत्यत्र नरशब्दितस्यापां स्रष्टुस्ततोऽपि सन्निधानात् तत्रैव तन्निर्वचनान्वयो युक्तः, न ब्रह्मणि । 'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् । तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥' इति तदनन्तरश्लोके तत्संज्ञाविधायके संज्ञिविशेषणवैयर्थ्यापत्तेश्च आद्यसंज्ञाविधानस्य सृष्टविषयत्वे आनन्तर्यात् द्वितीयसंज्ञापि तद्विषयेति शङ्कावारणाय संज्ञिविशेषणमितिवत् संज्ञाद्वयस्याप्येकविषयत्वे तत्प्रयोजनासम्भवात् , महाप्रलयकाले तु 'एतदासीत्तमोमयम् । प्रसुप्तमिव[1] चातर्क्यमप्रज्ञातमलक्षणम् । ततस्स्वयम्भूरव्यक्तः प्रभवः पुण्यकर्मणाम् । व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः । अतीन्द्रियः परोऽव्यक्तादन्तर्यामी सनातनः । नारायणइति ख्यातस्स एव स्वयमुद्बभौ । स्वशरीरादभिध्यायन् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदेवाण्डं समभवद्धेमरूपमयं जगत् । तत्र ब्रह्मा समभवदि'त्यादिमात्स्यवचने समानार्थे स्रष्टर्येव नारायणपदप्रयोगस्य निस्सन्दिग्धत्वाच्च, बह्वर्थैकरूप्यदर्शनेन मानववचनानां महोपनिषन्मूलत्वनिश्चयेन तदनुरोधेनापि नारायणपदनिर्वचनस्य तत्रत्यनारायणपदप्रयोगविषयत्वावश्यम्भावाच्च । तथा च 'ततस्स्वयम्भूर्भगवानि'त्यादिना प्रस्तुते देवे 'अप एव ससर्जादौ तासु वीर्यमपासृजदि'त्येतद्वचनसामर्थ्यसिद्धजलनिवासप्रवृत्तिनिमित्तनारायणपदनिर्वचनं नारायणपदवाच्यत्वेन प्रसिद्ध एव स्रष्टृत्वप्रतिपादन-

1. प्रसुप्तमिव चातर्क्यमिति पाठान्तरम् ॥

स्य पर्यवसानं गमयति । अन्यत्र पर्यवसाने प्रवृत्तिनिमित्तानुरोधेन नारायणपद-स्यापि तत्रैव पर्यवसानावश्यम्भावेन प्रसिद्धिविरोधापत्तेः । एवंचोपबृंहणानुरोधादुक्तोपनिषदि स्रष्टृत्वप्रतिपादनस्यापि नारायण एव पर्यवसानमभ्युपगन्तव्यम् । 'अहं च भवतो वक्त्रात् कल्पान्ते घोररूपधृत् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥' इति कौर्मे नारायणं प्रति शिववचनदर्शनात्तदनुसारेण 'तस्य ललाटात्त्र्यक्षश्शूलपाणि'रित्यत्र तस्येत्यस्य नारायण एव पर्यवसानावश्यकत्वाच्च । नन्वस्त्वेवं, तथापि अवान्तरसर्गविशेषे कस्मिंश्चिच्चतुर्मुखस्येव नारायणस्याप्यधिकारसम्भवादुक्तोपनिषदस्तद्विषयत्वेन चरितार्थत्वात् न परमशिवस्य जगन्मूलकारणत्वविरोध इति चेन्न । अस्यां नारायणात् भूतेन्द्रियादिसृष्टेरपि प्रतिपादनदर्शनेन महाकल्पादिसर्गविषयत्वात्, 'एको ह वै नारायण आसीत्' इति सर्वेतरव्यवच्छेदेन सर्गाद्यसमयेऽवस्थानप्रतिपादनस्य नारायणादन्यस्य कस्यचित् कल्पनायामसामञ्जस्याच्च । ननु, 'सर्वाण्याख्यानानि पारिप्लवे शंसती'ति सर्वाख्यानशंसनविधेर्वाक्यशेषश्रुतेषु 'मनुर्वैवस्वतो राजे'त्याद्याख्यानविशेषेष्विव एक इत्यस्य 'न ब्रह्मा नेशान' इत्यादिवाक्यशेषोपात्तब्रह्मेशानादिमात्रव्यवच्छेदे पर्यवसानसम्भवात् न किञ्चिदसाम्गत्यमिति चेन्न । प्रथमश्रुतस्य वाक्यशेषानुरोधेन सङ्कोचायोगात् । 'एष वाव प्रथमो यज्ञो यज्ञाना'मित्यत्र ज्योतिष्टोमस्यान्यसर्वयज्ञप्राथम्यस्यान्यसर्वयज्ञानां ज्योतिष्टोमपाश्चात्यत्वस्य वा विधेयस्य 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तंदीपयती'त्यादिवाक्यशेषे एकस्तोमक्रतुमात्रसङ्कीर्तनानुरोधेन सङ्कोचस्य क्रमलक्षणे निराकरणात् 'पारिप्लवे सर्वाण्याख्यानानी' त्यादिविध्यनन्तरं 'पारिप्लवमाचक्षीते'ति पुनर्विधानमानर्थक्यपरिहाराय वाक्यशेषश्रुतविशेषनियमार्थमित्यवच्छेदकपुनर्विधिश्रुत्यनुरोधात् सङ्कोचः, न तु वाक्यशेषविशेषसङ्कीर्तनमात्रानुरोधात् । इह तु सर्वेतरव्यवच्छेदेन सिद्धस्यापि ब्रह्मादिव्यवच्छेदस्य पुनस्सङ्कीर्तनं स्तावकत्वेनोपपद्यत इति न तस्य सङ्कोचापादनसामर्थ्यम् । तस्मा'देको हवा' इत्यादेर्महासर्गाद्यसमये सर्वेतरव्यवच्छेदेनावस्थानप्रतिपादनपरस्य नारायणादन्यत्रापर्यवसायित्वात् न सार्वत्रिकस्त्वदीयोऽयमविरोधनयनप्रकार इत्याशङ्क्य तन्नयनप्रकारं व्युत्पादयति—

समुत्पन्नस्त्वत्तः प्रथममसहायस्तत इमं
जगत्संहर्तारं पुरुषमरविन्दासनमपि ।
पुरास्राक्षीर्लक्ष्मीपतिरिति महत्योपनिषदा
यदुक्तं तत्तादृक् त्वयि न भजते पर्यवसितिम् ॥४९॥

सत्यमिह नारायणस्य स्रष्टृत्वप्रतिपादनं तत्स्वरूपाभिप्रायेणैव प्रवृत्तं परमशिव-

मूर्तौ न पर्यवस्यतीति, किं त्वस्तिधातोरुत्पत्त्यवस्थान्तर्गतसत्ताख्यद्वितीयभावविकारवाचित्वेन मीमांसकैर्व्यवस्थापनात्, 'लोहितो रोहितादासीत्सिन्धुस्तस्य सुतोऽभवत् ॥' इत्यादिप्रयोगदर्शनाच्च 'एको ह वै नारायण आसीत् 'इत्यादिवाक्यं ब्रह्मेशानाद्युत्पत्तेः पूर्वं सर्गाद्यसमये नारायणस्यैकाकिनः परमशिवात् प्रादुर्भावपरम् इति व्यवस्थापितस्य तस्य सकलजगन्मूलकन्दत्वस्य न कश्चिद्विरोधः । ब्रह्मादीनां नारायणसृष्टत्वेन प्रतिपादयिष्यमाणतया पारिशेष्यात् परमशिवस्यैतदुत्पत्तौ हेतुकर्तृत्वेनान्वयलाभात् आसीदित्यस्य उत्पत्त्यर्थकत्वे एक इत्यवधारणस्य उत्पत्तिमदितरमात्रव्यवच्छेदकारितया अनादिमुक्तपरमशिवसद्भावप्रतिक्षेपासामर्थ्यात् कथञ्चित्सामर्थ्यसम्भवेऽपि 'एष वा व प्रथमो यज्ञ' इति ज्योतिष्टोमस्य सर्वयज्ञप्राथम्यश्रुतेः 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति श्रुत्यन्तरदर्शनात् सङ्कोचवत् त्रिमूर्त्युत्तीर्णसर्वमूलभूतपरमशिवमूर्तिसद्भावप्रतिपादनपरानेकश्रुतिविरोधपरिहाराय सङ्कोचोपपत्तेश्च, परमतेऽपि नित्यसूरिसमर्थनसंरक्षणाय तस्यानादिमुक्तेतरमात्रव्यवच्छेदपरत्वस्य वक्तव्यत्वाच्च । यद्यप्यस्तिधातोस्तत्रतत्र कालसंसर्गादिपरोऽपि लोके वेदे च प्रयोगो दृश्यते, तथापि प्रबलानेकश्रुत्यन्तरानुरोधादिहाप्युपसंहारे नारायणानुवाकप्रक्रियाप्रत्यभिज्ञानप्रापितब्रह्मनारायणादिविभूतिविशिष्टपरमशिवोपासनातात्पर्यानुरोधाच्चाल परमाशिवात् प्रादुर्भावपर एव तत्प्रयोगः । अत एव उपबृंहणे आसीदित्यस्य स्थाने 'प्रादुरासीत्तमोनुद' इति तमोऽधिष्ठातुः परमशिवात् प्रादुर्भाव उक्तः । न च तमोनुदित्येतत इगुपधलक्षणकप्रत्ययान्तत्वेन प्रादुर्भवितृविशेषणमेवेति शक्यं वक्तुम् । 'आसीदिदं तमोभूतमि'ति श्लोकेन सर्गादौ तमोरूपेण जगदवस्थानं प्रतिपाद्य 'ततस्स्वयम्भूर्भगवानि'त्यादिना तदनन्तरं प्रादुर्भूतत्वेनोच्यमानस्य रूपस्य पूर्वसिद्धतमोऽधिष्ठातृत्वायोगात्, तस्य प्रादुर्भवितृविशेषणत्वे 'योऽसावि'त्याद्यनन्तरश्लोकस्यासाङ्गत्यापत्तेश्च । स ह्यतीन्द्रियग्राह्यत्वादिधर्मविशिष्टात् परमेश्वरात् प्रस्तुतस्य स्वयम्भुवो भेदव्यवच्छेदपरः।'षड्विंशतिरित्येव ब्रूयादि'तिवदेवकारोपहतविधिशक्तिकतया तस्य स्वयम्भवितृत्वाद्यविधायकतया तत्र स्वयमुद्बभावित्यंशस्य स्वयंभूरिति पूर्वश्लोकपरामृष्टस्वयंभवितृत्वधर्मेण धर्म्यनुवादपरत्वात् । न च निखिलप्रपञ्चप्रकृतिभूतमायाख्यतमोऽधिष्ठातृपरस्य तमोनुद इत्यस्य स्वयम्भूविशेषणत्वे तस्य परमेश्वरात् भेदप्रसक्तिरस्ति, न वा तदभावव्युत्पादनस्येह सङ्गतिरस्ति काचित् । अस्मत्पक्षे तु तमोऽधिष्ठातुरीश्वरात् स्वयम्भुवः प्रादुर्भावोक्त्या ततो भेदप्रसक्तिः । जीवस्य स्वयम्भूत्वानुपपत्तेः । तस्यापीश्वरभावे अनेकेश्वरवाद इति शङ्कावारणाय तदभावश्च वक्तव्य इति तमोऽधिष्ठाता परमेश्वर एव उपाधिविशेषकृतेन ना-

रायणमूर्त्यात्मना रूपान्तरेण सर्गादावभिव्यक्त इत्येतदभिप्रायोऽनन्तरश्लोकस्सङ्गच्छतेतराम् । तस्मा'त्तमोऽनुद' इति पदं क्विबन्तत्वेन पञ्चम्यन्तं प्रादुर्भावयितृपरमेव । प्रादुर्भावयिता च 'प्रशासितारमि'त्यादिशास्त्रोपसंहारश्रुतपरब्रह्मनिर्णयानुरोधात् परमशिव एव पर्यवस्यतीति उपसंहारस्याप्येवमैकार्थ्यं लभ्यते । न च स्वयम्भुवः प्रादुर्भावोक्तौ न प्रादुर्भावयित्रुक्तिः युज्यते , विरोधादिति वाच्यम् । कर्मपारवश्यं विना स्वेच्छाधीनाविर्भावत्वं हि स्वयम्भूत्वम् । तच्च प्रादुर्भावयितृसद्भावेऽपि न विरुध्यते । अन्यथा आदित्यादिभ्यः प्रादुर्भूतस्य विष्णोरस्स्वयंभूत्वापत्तेः । एवं चैकार्थ्यान्मात्स्यवचनेऽपि तमोनुद इति पञ्चम्यन्तं शिवपरमेव । तदेवं न्यायोपबृंहणाभ्यां महोपनिषदो महादेवात् प्रथममुत्पन्नस्य नारायणस्य भूतेन्द्रियप्रमुखसकलप्रपञ्चसर्गकारित्वप्रतिपादनपरत्वात् न कश्चिद्विरोधः । एवं नारायणोपनिषदादिषु तस्य स्रष्टृत्वप्रतिपादनस्यापीयमेव गतिर्द्रष्टव्या ॥४९॥

इति नारायणकारणत्वपरश्रुत्युपपत्तिः ॥

नन्वेवमपि कथं सर्वाविरोधोपपादनं, 'यो ब्रह्माणमि'ति मन्त्रे 'यो देवानामि'ति मन्त्रे च सकलदेवोत्पत्तेः पूर्वं ब्रह्मणः परमशिवादुत्पन्नत्वप्रतिपादनात् 'यजुर्भ्यो विष्णुमि'ति श्रुताष्टमूर्तिब्राह्मणे च तेनैव पुनर्विष्णुरुद्रयोस्सृष्टत्वाभिधानात् 'अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं बभूव । तत्र ब्रह्मा विष्णुर्जातो जातवेदा' इत्यादिश्रुतौ 'रुद्रसंज्ञस्य देवस्य रूपे मूर्तिः प्रजायते । तेन क्षिप्तं रसे वीर्यं परमूर्त्यभिमानिना ॥ तदण्डमभवद्वीर्यं सहस्रकिरणप्रभम् । विष्णुस्तत्प्राविशत् साक्षान्मम शक्तेस्तु वैभवात् ॥ पुनर्नारायणाख्यां मे नियोगात् प्राप्तवानसौ ॥' इत्यादिवासिष्ठलैङ्गदृष्टतदुपबृंहणैश्च ब्रह्मनारायणयोः रुद्रसृष्टत्वोक्तेश्च महोपनिषदादिप्रक्रियया ब्रह्मरुद्रयोस्तदितरप्रपञ्चस्य नारायणसृष्टत्वस्य निर्धारणायोगादित्याशङ्क्याह—

**क्वचित्कल्पे वेधाः क्वचिदपि हरिः क्वापि च हरः**
**समुत्पन्नस्त्वत्तः प्रथममितरौ नाथ सृजति ।**
**अनेनाप्याधिक्यं कथमपि च वैकल्यमथवा**
**न कस्यापीत्याहुर्निगमगणनिष्कर्षनिपुणाः ॥५०॥**

अत्र भगवान् वायुः—'तपसा तोषयित्वा तं पितरं परमेश्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे; पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवान् तद्वत् ब्रह्माण्डमसृजत् पुनः ॥ नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥ एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्पर-

समुद्भवात् ।' इति तेषां न्यूनाधिकभाववादे प्रत्यवायोऽपि तेनैव दर्शितः । 'अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥' इति । एवं च यथा 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् यदुपभृति प्रयाजानुयाजेभ्यस्तत्' इति जौहवस्य औपभृतस्य चाज्यस्याविशेषेण प्रयाजार्थत्वश्रवणम् 'अतिहायेडो-बर्हिः प्रतिसमानयते जुह्वामौपभृतमि'ति जुह्वामौपभृताज्यसमानयनकालविधिबलात् तत्पूर्वोत्तरप्रयाजविशेषविषयतया च व्यवतिष्ठते, एवं तत्रतत्र श्रुतिप्रदेशे विधातुर्विष्णोः रुद्रस्य च स्रष्टृत्वश्रवणमुदाहृतोपबृंहणबलात् कल्पभेदविशेषविषयतया व्यवतिष्ठत इति न कश्चिद्विरोधः । एतेन कतिपयश्रुतिपुराणादिपठितानि विष्णोर्ब्रह्मरुद्रकारणत्वादिवचनान्यवलम्ब्य परेषां तेषु विष्णोरुत्कर्षसमर्थनं निरस्तम् । ब्रह्मरुद्रयोरपि स्वस्वेतरगुणमूर्तिकारणत्ववचनानां सद्भावात् । यत्तु तेषां तस्य सत्त्वोपाधिकत्वेन उत्कर्षसमर्थनं, तदप्ययुक्तम् । 'सत्त्वोद्रिक्तस्ततो ब्रह्मा शून्यं लोकमवैक्षत' इत्यनेकपुराणेषु 'यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणः । संहाराय त्रिमूर्तीनां स रुद्रस्स्यान्न चापर' इति सूतगीतायाम्, 'सत्त्वं देवा हरादय' इति वासिष्ठरामायणे, 'तमूचुर्भ्रातरो रुद्रस्सेवितस्सात्त्विकैर्जनैः । मोचयेत्सत्त्वसंयुक्तः पूजयेश्शमतो हरम् ॥' इति कौर्मे च ब्रह्मरुद्रयोरपि सत्त्वयोगप्रतिपादनात् । एतेन रुद्रस्य तामसत्वेन निकर्षप्रलापोऽपि मूर्खाणां गलहस्तितः । निरन्तरं दुःखमयसंसारचिरतरपरिवृत्तिश्रान्तानां जीवानां कञ्चित्कालं विक्षेपविगमसमुद्भवदात्मानन्दानुभवेन विश्रान्तिं सम्पादयितुकामस्य तस्य संहाराय तमोगुणग्रहणस्य द्रुश्चिकित्सव्रणपीडितानां व्रणं शिशमयिषोश्शस्त्रग्रहणस्येव 'निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः ॥ न किञ्चिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका ॥' इति शिवपुराणोक्तन्यायेन निरतिशयकरुणाम्बुधित्वालिङ्गत्वात् ब्रह्मकोटौ गुणवश्यत्वासम्भवात् निद्रालस्यादेः तमःकार्यस्य तत्राप्रसिद्धेश्च तत्र तमोयोगमात्रेण तत्पारवश्यस्य शङ्कितुमशक्यत्वाच्च । यत्तु वाराहगारुडादिषु पुराणेष्वेव गुणमूर्तिषु विष्णोः ब्रह्मशिवकारणत्वसात्विकादिविशेषप्रदर्शनेन उत्कर्षसमर्थनं, न तत्रातीव भारः कार्यः । अन्यथा कालिकाखण्डादिष्वनिलादप्रमुखमहर्षिभिस्तेषु रुद्रस्योत्कर्षनिर्धारणात् उक्तरीत्या 'यत्तामसकलालेशगृहीतस्त्वं पयोनिधौ । निद्रापरवशश्शेते कथं तत्सात्त्विको भवान् ।' इत्यादिब्रह्माण्डपुराणादिवचनाच्च रुद्रस्यापि उत्कर्षनिर्धारणापत्तेः । तस्मात्सर्वं प्रशंसामात्रपरमित्यलमलक्ष्यलक्षीकरणेन । तस्मात् त्रयोऽपि फलतस्तुल्या एवेति सारम् ॥१०॥

इति त्रिमूर्तीनां फलतस्साम्यनिरूपणम् ॥

अथ त्रयाणां तौल्यसमर्थनप्रसङ्गात् रुद्रोत्कर्षपक्षमपि सोपपादनमुपन्यस्यति—

हरं केचित् प्राहुर्द्रुहिणमधुजिद्भ्यामपि परं
क्वचित्ताभ्यामस्योद्भवकथनमप्यंशविषयम् ।
त्वदौपम्यं नामाकृतिचरितवेषप्रभृतिभिः
त्वदीयप्रत्यासत्त्यतिशयकृतं चास्य भगवन् ॥११॥

केचित् महर्षयः—'परात् परतरो ब्रह्मा तत्परात् परतो हरिः । तत्परात् परतोऽधीश'[1] इत्यादिश्रुतिहृदयाभिज्ञाः पद्मविष्टराद्विष्टरश्रवसश्च स्मरहरमाधिकमाहुः ; तथा हि भगवान् पराशरस्तावत्—'देवताभ्यस्समस्ताभ्यः स्रष्टा ब्रह्मा परस्स्मृतः । ब्रह्मणश्च महाविष्णुर्वरिष्ठस्सर्वपालकः । विष्णोरपि परस्साक्षाद्रुद्रस्संहारकारकः ।' इति । सूतगीतासु सूतोऽप्याह—'परमात्मविभागत्वं ब्रह्मादीनां द्विजर्षभाः । समानमपि रुद्रस्तु वरिष्ठो नात्र संशयः ॥' इति । एवं 'ब्रह्मणो हृदयं विष्णुर्विष्णोरपि शिवस्स्मृतः । शिवस्य हृदयं सन्ध्या तेनोपास्या द्विजादिभिः'[2] इति, 'ब्रह्मा तु पूरको ज्ञेयः कुम्भको विष्णुरुच्यते । रेचकस्तु तथा ज्ञेयः क्षराक्षरपरश्शिवः ।' इत्यादिषु काश्यपस्मरणगीतासारादिवचनेष्वपि तस्योत्कर्षाविष्करणानि द्रष्टव्यानि । यत्तु क्वचित्क्वचित् ब्रह्मणः श्रीपतेर्वा तस्याविर्भाववर्णनं, तदपि तदंशविषयं वदन्तीत्याह—क्वचिदिति । तदाह सूतसंहितायां—'तताप परमं घोरं ततो विप्राश्चतुर्मुखः । सृष्ट्यर्थं ब्रह्मणस्तस्य भ्रुवोर्घ्राणस्य मध्यतः । अविमुक्ताभिधाद्देशात् स्वकीयात्तु विशेषतः । त्रिमूर्तीनां महेशस्य द्विजा वेदान्तवित्तमाः । अंशभूतो महादेवस्सर्वदेवनमस्कृतः । अर्धनारीश्वरो भूत्वा प्रादुरासीत् कृपानिधिः ॥' इति । अमुमेवार्थं संग्रहेणाह राजधर्मे भगवान् पराशरः—'सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः ।' इति, लैङ्गे च शिलादं प्रति शक्रः—'तस्य हृत्कमलस्थस्य नियोगादंशजो विभोः । ललाटं तस्य निर्भिद्य प्रादुरासीत् प्रभोर्मुखात् ॥' । अंशः परमशिवस्य संहाररुद्रः, ततो जातस्तदेकदेशविभागरूप इति यावत् । एवं च यद्वायुसंहितायां—'निर्दिष्टः परमेशेन महेशो नीललोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुजः ।' इति परमशिवनियोगाद्रुद्रस्य ब्रह्मणः पुत्रभावेनाविर्भाववर्णनं, यच्चादित्यपुराणादिषु 'त्वामेव पुत्रमिच्छामी'ति प्रार्थयमानाय तस्मै दत्तवरपरिपालनाय ततस्तदाविर्भाववर्णनं, तत्सर्वं तदंशविशेषाविर्भावाभिप्रायमेव द्रष्टव्यम् । तेष्वेव महाकल्पादौ परमशिवात् उत्पन्नत्वेन महासंहारपर्यन्तावस्थायित्वेन च वर्णितस्य

१. परतरशम्भुः इति पाठान्तरम् ॥
२. द्विजातिभिरिति पाठान्तरम् ॥

तस्यावान्तरकल्पेषु पाद्मवाराहादिषु पुनःपुनः उत्पत्त्यसंभवेन तेषु प्रत्यवान्तरकल्पं तदाविर्भाववर्णनस्य तदंशविशेषविषयत्वस्यावश्यवक्तव्यत्वात् । एवं 'तस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रत्सत्यं ब्रह्मचर्यं तप' इति श्रुतिप्रतिपादितस्यापि रौद्राविर्भावस्य द्रोणपर्वणि—'ततः पार्श्वे वृषाङ्कस्य ब्रह्मचारी व्यवर्तत । पिङ्गाक्षस्तपसा श्रेष्ठः बलवान्नीललोहितः ॥' इति कैलासे श्रीकण्ठपार्श्वेऽवस्थानोक्त्या , कौर्मे नारायणं प्रति—'अहं च भवतो वक्त्रात् कल्पान्ते घोररूपधृत् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ।' इति शिवोक्त्या चैच्छिकांशावतारत्वाविष्करणात् तन्मूलः पौराणिकव्यवहारोऽपि अंशावताराभिप्राय एव । एवंच यत् क्वचित्क्वचिद्रुद्रस्य पितामहात् नारायणाद्वा निकर्षवर्णनं, तदपि तत्तदाविर्भूतस्यांशविशेषस्य स्थाण्वादिशब्दितस्य रामकृष्णाद्यवताराणां दशरथवसुदेवादिभ्य इव लोकदृष्ट्या निकर्षाभिनयपरम् । विष्णुपितामहयोस्तु स्वमूलरूपेणापि रुद्रात् निकर्षः । कौर्मे कृष्णतपश्चर्यायां शिवदर्शनप्रस्तावे—'ततोऽन्वपश्यद्गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् । स्तुवन्तमीशं बहुभिर्वचोभिश्शङ्खासिचक्रार्पितहस्तमाद्यम् ॥' इत्यादिवचनदर्शनात् । कृता चेत्थं व्यवस्था सूतसंहितायां—'ब्रह्मा विष्णुश्च रुद्रस्य स्वासाधारणरूपतः । स्वविभूत्यात्मना चापि कुर्यातामेव सेवनम् । रुद्रस्त्वनैव रूपेण विष्णोश्च ब्रह्मणस्तथा ॥ न कुर्यात्सेवनं विप्रा विभूतेर्वा तयोरपि । केवलं कृपया रुद्रो लोकानां हितकाम्यया ॥ स्वविभूत्यात्मना विष्णोर्ब्रह्मणश्च परस्य वा । करोति सेवां हे विप्राः कदाचित्सत्यमीरितम् ।' इति । 'त्वदौपम्यमि'त्येकादशश्लोकव्याख्याने प्रपञ्चितोऽयमर्थः । तदेवं त्रयाणां मध्ये रुद्रोऽधिक इत्यपरः पक्षः । अयमेव निखिलशैवाङ्गीकृतः पन्थाः । अत एव परमशिवसंहाररुद्रयोर्व्यवस्थितानामपि गुणचरितानां प्रत्यासत्तिविशेषदृष्ट्यैव परस्परास्मिन् व्यपदेशः सर्वत्र दृश्यते । येन तयोर्विवेकाग्रहात् भ्रमतमसि मज्जन्ति बालिशाः । अत्र च पक्षे अयं परस्त्वयं नेत्यादिवचनं 'यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः । साधयेद्दुदरव्याधियुक्तो भवति मानवः ॥' इत्यादिकर्मविपाकस्मृतिवचनाद्यैकार्थ्यात् परापरभावमूलकभेदव्यवस्थापनव्यसने प्रत्यवायोद्घाटनपरं, न तु वासुदेवसङ्कर्षणादीनामिव सत्येवाभेदे अभिव्यक्तिविशेषकृततारतम्यप्रतिपादनेऽपीति न कश्चिद्विरोधः ॥९१॥

॥ इति त्रिमूर्तिषु शिवस्य उत्कर्षनिरूपणम् ॥

आस्तां प्रसङ्गागतविशेषावान्तरविचारः । सर्वथापि भगवान् उमासहायः परमशिव एव सर्वोत्तरस्सिद्ध इति स एव सर्वैर्निषेव्य इति सर्वोत्तरत्वव्यवस्थापनं तत्साध्यमर्थमुपदर्शयन्नेवोपसंहरति—

त्रयाणां देवानां भवतु सममैश्वर्यमथवा
भवत्वेषां मध्ये भवभयहरस्स्थाणुरधिकः ।
प्रसिद्धस्त्वं तावत् परमशिव सर्वोत्तर इति
त्वमेवैकस्सेव्यो भवसि निखिलस्यापि जगतः ॥९२॥

स्यादेतत्, अस्त्वेवमुक्तया रीत्या सर्वदेवोत्तमश्शिवः[1] । तथापि सर्वसेव्यत्वं नास्य सिध्यति तावता ॥ विधानात् फलदानाद्वा कश्चित्सेव्येत केनचित् । यथा कलत्रेण पतिर्यथा भृत्येन भूपतिः ।*। तदभावे तु सेव्यत्वेनोत्कर्षस्स्यात्[2] प्रयोजकः ॥ न ह्युत्कृष्ट इति स्त्रीणां भवेत्सेव्यः परः पुमान् । न वा लुब्धोऽर्थिनां राजा सत्यन्यस्मिन् बहुप्रदे ॥ इति मन्दधियां शङ्कां मूर्खजल्पैर्दृढीकृताम् । छेत्तुं व्यवस्थापयति सर्वसेव्यत्वमीशितुः—

त्वमेकस्सर्वेषां पुरमथन सेव्यो जनिमताम्
अजानन्तस्त्वेतत् बत विफलयन्त्यायुरधमाः ।
मनुष्या देवानामिव तव सदेवासुरनराः श्रुता
ह्येते जीवाः पशुवदुपभोग्याः पशुपते ॥९३॥

अयमर्थः—[3](शिवस्य पशवो जीवास्सर्वे संसारवर्तिनः ॥ भारतादिषु गण्यन्त इति तावदतिस्फुटम् । तेषां गवादिरूपाप्त्या न देहादिविधानतः । तत्पशुत्वव्यवहृतिः प्रमाणान्तरवैशसात् । किंतु देवपशुत्वोक्तिर्यथा वाजिश्रुतौ नृणाम् । गौणी तत्कर्मकारित्वात्तथाभवितुमर्हति । ततश्च देवयजनं तत्पशूनां यथा नृणाम् । नित्यं तथैव सर्वेषां जीवानां शम्भुपूजनम् । अन्यथा तत्पशुत्वोक्तिस्तेषां निर्विषया भवेत् । श्रुतिस्मृतिपुराणेषु पठ्यमानाखिलेष्वपि । किञ्च लोके यथा पाशैर्गजाश्वमहिषादयः ॥ आबध्य स्ववशीकृत्य वाहनादिषु कर्मसु । विनियोगेन भुज्यन्ते पुरुषेण निजेच्छया । एवं जायादिभिः पाशकल्पैस्संसार-

---

१. कामं सर्वोत्तमश्शिवः इति पाठान्तरम् ॥ *. यस्य सेवा न विहिता न च विश्राणने रतिः इति क्वचिदधिकः पाठः ॥ २. नोत्कर्षोऽस्येति पाठान्तरम् ॥

३. अयं भावः— ब्रह्माद्यास्संसारवर्तिनस्सर्वे जीवाश्शिवस्य पशव इति भारतशैवलैङ्गागमेषु तावत् स्फुटम् । तच्च प्रतिपाद्यमानं पशुत्वं न मुख्यं सम्भवति । लोके गवाश्वादिष्विव तेषु पशुत्वव्यवहारासम्भवात् । किं तु बृहदारण्यकश्रूयमाणमर्त्यगतदेवदेवपशुत्वमिव मुख्यपशुगतपशुमत्कार्यकारितालक्षणगुणयोगाद्गौणम् । ब्रह्मादिकर्तव्यं च शिवकार्यं देवपशुक्रियमाणदेवयजनमिव शिवयजनमित्युक्तम् । अन्यथा पशुत्वोक्तिवैयर्थ्यात् शिवकर्म शिवाराधनमेवेति । अयमर्थः कौर्मादिषु स्पष्टः । तच्च शिवाराधनं नित्यम् । अकरणे प्रत्यवायावगतेः । इत्ययं पाठः अर्धचन्द्ररेखाङ्कितश्लोकस्थाने तत्पर्यायतया क्वचित्पुस्तके दृश्यते ॥

वार्तीभिः । नियम्य स्वेषु कार्येषु भुज्यन्ते विनियोगतः । शिवेनेति गवा-श्वादेरुपपाद्यगुणान्वयात् ॥ पुराणे शैवलैङ्गादाविस्थमेव निरूपितम् । प-शुत्वं सर्वजीवानां तत्तत्कर्म्यादौपचारिकम् ।) ब्रह्माद्यास्स्थावरान्ताश्च देव-देवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः । तेषां पति-त्वाद्देवेशः शिवः पशुपतिस्स्मृतः । मलमायादिभिः पाशैः स बध्नाति पशून् पतिः ॥ स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । चतुर्वि-शतितत्त्वानि मायाकर्मगुणा अमी । विषया इति कथ्यन्ते पाशा जीवनि-बन्धनाः । ब्रह्मादिस्तम्बपर्यन्तान् पशून् बध्वा महेश्वरः । पाशैरेतैः प-तिर्देवः कार्यं कारयति स्वकम् । (इत्यादिवचनव्रातैरागमेषु च भूरिशः । एवञ्चसति देवानां बृहदारण्यकश्रुतौ । पशुतुल्यास्समुदिता मर्त्यास्तत्कर्मका-रणः । इति तेषां देवतानामिज्या नित्या यथातथा ।) सर्वेषामेव जीवानाम-स्मिन् संसारमण्डले । नित्या भगवतस्सेवा चन्द्रखण्डशिखामणेः । सा च तेषां नियोगात् स्यात् स्वस्वकृत्योपपादनम् । यत्र कर्मणि यो भृत्यः प्रभुणा विनियु-ज्यते ॥ तस्यैव करणं ह्यस्य तत्सेवेत्यभिधीयते । अत एव चतुर्वक्त्रप्रभृतीनां शिवाज्ञया ॥ सर्वेषां स्वस्वकार्येषु प्रवृत्तिरुपपादिता । शैवादिषु पुराणेषु तत्प-शुत्वोक्त्यनन्तरम् ॥ कौर्मादौ कर्मयोगस्य वर्णितस्य प्रपञ्चतः । तदाराध-नरूपत्वं विस्पष्टं प्रतिपादितम् ॥ रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम् । इत्यादि भारतेऽप्युक्तं पर्वस्वारण्यकादिषु ॥ वर्णाश्रमाचारवता पुरुषेण परः पुमान् । इत्यादेर्न विरोधो नश्शिवाभेदाद्रमापतेः ॥ भेदवादे तयोस्तस्य स्वार्थत्यागस्तु निश्चितः । शिवं प्रति न युज्येत पशुत्वं ह्यन्यथात्मनाम् ॥ इत्थं सेवा महेशस्य सर्वेषां स्वस्वकर्मभिः । नियतेति स्थितं किञ्च सर्वेषामेव देहिनाम् । शिवलिङ्गार्चकत्वं च भारतादिषु वर्णितम् । यस्य ब्रह्मा च वि-ष्णुश्च त्वं च शक्रस्सहामरैः । अर्चयध्वे महालिङ्गं तस्मात् श्रेष्ठतरो हि कः ॥ ऋषयश्चापि देवाश्च गन्धर्वाप्सरसस्तथा । लिङ्गं यस्यार्चयन्ति स्म तदारा-

१. इत्याद्यागमेषु 'एतावन्तो वै पशवः द्विपादश्चतुष्पादश्च तस्माद्रुद्रः पशूनामधिपतिरि'ति श्रुतिसम्मतस्य जीवानां पशुत्वस्य शिवपशुपतित्वस्य च प्रतिपादनपूर्वकं पतिभूतशिवानुपासने भृत्यभू-तजीवानां बहुदुःखनिदानबृन्दप्रतिपादनात्, भारते— 'नेशं नैत्यकमात्मन' इति शिवाराधननित्यतायाः कण्ठत उक्तेश्च । ततश्च यस्याकरणे दुःखभाग्भवेत्, तदप्युपेक्षमाणः स्वानर्थं सम्पाद्य अधमो जनः स्वीयमायुर्व्यर्थीकरोति । आश्चर्यं खल्वेतदिति । इत्ययं पाठः अर्धचन्द्ररेखाङ्कितश्लोकस्थाने तत्पर्यायतया क्वचित्पुस्तके दृश्यते ॥

२. सा च तेषां तन्नियोगात् स्वस्वकृत्योपपादनम् । इति पाठान्तरम् ॥

ध्यतमस्स्मृतः ॥ इत्येवमादिवचनं ह्यानुशासनिके स्मृतम् । लिङ्गानि पाण्डुपुत्राणां महाप्रस्थानवर्त्मनि ॥ त्रिसन्ध्यं पूज्यमानानि देवविद्याधरादिभिः । पदेपदे वर्णितानि जैमिनीये च भारते ॥ वैष्णवे च तथा ब्राह्मे लोकपालाष्टके तथा ॥ पैतृकेषु च लोकेषु दिवि देवालयेषु च । विद्याध्रे च गान्धर्वे यक्षरक्षःपिशाचके ॥ गणे गरुडनागेषु तथा वै किन्नरेषु च । पातालेषु तथा स्वर्गे दानवेषु च सुन्दरि ॥ आराधितो महादेवि लिङ्गमूर्तिर्महेश्वरः । ब्रह्मा विष्णुस्तथा शक्रः लोकपालाश्च देवताः॥ लिङ्गार्चनरता एते मानुषेषु च का कथा । एतादृशैर्वचोबृन्दैर्महाद्याश्शिवपूजनम् ॥ कुर्वन्तीति पुराणेषु बहुधोद्घोषणं कृतम् । हरिवंशे च विबुधैस्सहस्राक्षादिभिर्दिवि ॥ शिवस्योत्सवनिर्माणं भक्त्या कृतमिति श्रुतम् ॥ यद्वामनपुराणे तु वचनं परिपठ्यते । यद्यर्चयन्ति त्रिदशा मम लिङ्गं सुरोत्तमाः । तदेतत् प्रतिगृह्णीयान्नान्यथा तु कथञ्चन ॥ ततः प्रोवाच भगवन्नेवमस्त्विति केशवः । ब्रह्मा स्वयं च जग्राह लिङ्गं कनकपिङ्गलम् ॥ इत्यस्यापि विभोर्विश्वपूज्यत्वे न विसम्मतिः । त्रिदशग्रहणं ह्यत्र सर्वेषामुपलक्षणम् ॥ ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्चने । शास्त्राणि चैषां मुख्यानि नानोक्तिविविधानि च ॥ इत्यनन्तरसन्दर्भे द्विजातीनामपि ग्रहात् । यद्यर्चयन्तीत्युक्तिस्तु पाशुपत्यार्थनानयात् ॥ नेतव्येति स्थितं तावत् सर्वसेव्यत्वमीशितुः । सर्वसाधारणो धर्मश्शिवभक्तिरिति स्थितम् । विशेषतोऽपि मर्त्यानां धर्मोऽयं स्थाप्यतेऽधुना—

मनुष्यत्वं प्राप्य त्वयि विदधते दुष्कृतिवशात्
न भक्तिं ये तेषां कथमपि च पश्यामि न गतिम् ।
यतस्तद्धर्मोक्त्युत्करमुपदिशद्भिर्मुनिवरैः
विशिष्यैषा तेषामपि गिरिश धर्मेषु गणिता ॥५४॥

वामनपुराणे—'किं तु श्रेयः परे लोके किमुचेह द्विजोत्तमाः ।' इति पृष्टवन्तं सुकेशिनं प्रति 'इत्थं सुकेशिवचनं निशम्य परमर्षयः । प्रोचुर्विमृश्य श्रेयोऽर्थमिह लोके परत्र च ।' इत्युपक्रम्य 'श्रेयो धर्मः परे लोक इह च क्षणदाचर ।' इत्यादिना महर्षीणामुत्तरं प्रतिपाद्य पुनरपि 'किंलक्षणो भवेद्धर्मः यदाचारेण सत्क्रिया । यमाश्रित्य न सीदन्ति देवाद्याश्च तदुच्यताम् ।' इति धर्मस्वरूपविषयं सुकेशिप्रश्नमुक्त्वापि अनन्तरं धर्माधिकृतं प्राणिजातं देवदानवसिद्धगन्धर्वविद्याधरकिंपुरुषपितृऋषिमानुषगुह्यकराक्षसपिशाचभेदेन द्वादशधा विभज्य देवादिक्रमेण मनुष्यधर्मविधानमध्ये 'जितेन्द्रियत्वं शौचं च माङ्गल्यं भक्तिरेव च ॥ शङ्करे भास्करे देव्यां धर्मो

ऽयं मानवस्स्मृतः ।' इति शिवभक्तिर्विशिष्य मनुष्यधर्मत्वेनापि महार्षिभिर्विहितेति प्रतिपादितम् । तथा च स्वधर्मातिक्रमेण सम्यगनुष्ठितानामपि धर्मान्तराणां वैफल्यस्य श्रुतिस्मृतिषु प्रसिद्धेः शिवभजनविमुखानां मनुष्याणां न केनापि धर्मेण सद्गतिस्सम्भवतीति तात्पर्यार्थः ॥९४॥

मनुष्येष्वपि सर्वेषु विशेषेण द्विजन्मनाम् । शरणं शम्भुपादाब्जमित्येतत्सम्प्रदर्श्यते—

द्विजानां गायत्री खलु परमुपास्या नियमिता
प्रसिद्धं तस्याश्च त्वमसि परमं दैवतमिति ।
अकुर्वाणस्यातस्तव चरणसेवां द्विजपशोः
अवस्त्रोऽलङ्कारस्सकलमपि सत्कर्मचरितम् ॥९५॥

अयमाशयः—त्रैवर्णिकानां सर्वेषां गायत्री परमा गतिः । कर्मान्तरेष्वशक्तोऽपि तयैव लभते गतिम् । तां विनान्यानि कर्माणि निष्फलानि कृतान्यपि ॥ अस्मिन्नर्थे न कस्यापि वैदिकस्य विसंमतिः । सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु । यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत् । परिहाप्यापि वेदांस्त्रीन् कर्माणि विहितानि च ॥ गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भयः । गायत्रीहीनवेदास्तु साङ्गा अपि च निष्फलाः ॥ (इत्यादिस्मृतिवाक्यानामैकमत्यस्य दर्शनात् । अमुष्याः प्रतिपाद्या च देवता श्रीसदाशिवः ॥ असाधारणतत्रत्यभर्गशब्देन नाथ्यनः । यदेष रुद्रो भर्गाख्यो ब्रह्मवादिन इत्यदः ॥ वाक्यं मैत्रायणीयानां गायत्र्यर्थनिरूपणे ।) या च भगमयत्वोक्तिश्श्रुतौ तलवकारिणाम् ॥ तत्पदस्य द्वितीयस्य ताभ्यामस्ताऽस्य सान्तता । आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ॥ भर्गाख्यं किमपीत्यादिव्यवहाराच्च तद्विदाम् । प्रथमात्र द्वितीयार्थे छन्दसि व्यत्ययस्मृतेः ॥ भूयस्सृष्ट्वा तु पतय इत्यत्र प्रथ-

१. इत्यादिस्मृतिवचनैः द्विजशब्दवाच्यानां त्रैवर्णिकानां गायत्र्युपासनम् आवश्यकमिति स्थितम् । गायत्रीप्रतिपाद्या च देवता श्रीसदाशिव एव । मैत्रायणीये गायत्र्यर्थनिरूपणे 'य देष रुद्रो भर्गाख्यः ब्रह्मवादिन इत्यदः ।' इत्यादेर्दर्शनात्, 'हरस्स्मरहरो भर्ग' इति कोशकारवचनाच्च भर्गशब्दस्य तस्मिन्नसाधारण्येन रूढत्वावगमात् । न चैवमति 'गो भर्ग' इति व्यवहितान्वयदोषप्रसङ्ग इति वाच्यम् । योग्यताऽऽसत्त्योर्विरोधे योग्यताया आवश्यकत्वेन व्यवहितेनापि योग्येनैवान्वयस्य युक्तत्वात्, स्वाधीनप्रयोगेष्वपि लौकिकवाक्येषु तथादर्शनात् 'भूयस्सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा' इत्यत्र पतय इति शब्द इव द्वितीयार्थे प्रथमासम्भवेन भर्गोमहीति अव्यवहितान्वयस्यापि उपपन्नत्वात् । इत्ययं पाठः अर्धचन्द्ररेखाङ्कितश्लोकस्थाने क्वचित् पुस्तके दृश्यते ॥

मा यथा । यद्वा सुपां सुलुक्सूत्रादमस्स्वादेशकल्पनात् ॥ स्यात् द्वितीयान्त एवायं प्रथमान्तो न कल्प्यते । अथवा प्रथमान्तत्वात् स्वस्थानानन्वयी भवन् ॥ तृतीयपादमागत्य विशेष्यस्यार्पकस्त्वयम् । नन्वेवंसति तच्छब्दे न घटेत नपुंसकम् ॥ तत्रापि यत्पदे पुंस्त्वं न युज्येत कथञ्चन । युक्ता सवितृवृत्तित्वे तस्य पुल्लिङ्गतेति चेत् । तदेव तावत्तस्येह न युक्तमिति मन्महे ॥ सविता हि किमादित्यः किं वा ब्रह्मादिकारणम् । न ब्रह्म न हि तस्यापि वरेण्यं तेज इष्यते ॥ सवितुर्भर्ग इत्येवमन्वयोऽभ्युपगम्यताम् । ब्रह्मणो ज्योतिरित्येवमर्थो भेदोपचारवान् ॥ मैवं वरेण्यमित्येतत्पदं सान्निधिवर्ति च ॥ कॢप्तस्यान्वयमन्यत्र प्रतिसम्बन्ध्यपेक्षि च । अतस्सवितृशब्दोऽयं न तदुल्लङ्घ्य केनचित् ॥ शक्येत संयोजयितुमपि पङ्कजयोनिना । श्वेताश्वतरशाखायामनयोस्तावदन्वयः ॥ तदक्षरं तत्सवितुर्वरेण्यमिति निश्चितः । अपि मैत्रायणीयानां शाखानामन्वयोऽनयोः ॥ विस्पष्टमेतत्सवितुर्वरेण्यमिति त्रिश्रुतः । तथा मन्त्रे तां सवितुर्वरेण्यामिति याजुषे ॥ प्रसिद्धः प्रतिबुद्धानामनयोरन्वयस्स्फुटम् । शब्दार्थसत्यनिज्ञानात् गायत्र्यर्थानुबन्धिषु ॥ एतेषु श्रुतिवाक्येषु भर्गशब्दो न पठ्यते । तदेतेष्वनयोरेव निश्चितेऽन्योन्यमन्वये ॥ ऐकार्थ्यादनयोरेव युक्तोऽत्रापि समन्वयः । एवं सवितृशब्दस्य न ब्रह्मार्थ इति स्थिते ॥ सहस्रकिरणो देवः प्रसिद्धोऽर्थोऽवसीयते । आदित्यमण्डलासीनं रुक्माभं पुरुषं परम् ॥ ध्यायन् जपेत्तदित्येतां निष्कामो मुच्यते द्विजः । आदित्यमण्डलान्तस्थं परं ब्रह्माधिदैवतम् ॥ छन्दो निचृत्स्यात् गायत्री मया सृष्टा सनातनी । इत्यादिस्मृतिवचनैस्सौरमण्डलमध्यगम् ॥ गायत्र्या दैवतं ब्रह्मेत्येतत्तावद्विनिश्चितम् । न तत्सवितृशब्दस्य जगत्प्रसवितृत्वतः ॥ ब्रह्मण्येव प्रवृत्तत्वे कथंचिदपि युज्यते । तस्यादित्यपरत्वे तु येन सूर्य इति श्रुतेः ॥ तस्य तेजःप्रदत्वेन वरेण्यं मण्डलस्थितम् । तदन्तर्यामिभावेन च्छन्दोगादिश्रुतिश्रुतम् ॥ तच्छब्दाभिहितं ब्रह्म देवतेति प्रसिध्यति । एष देवो महादेवः केवलः परमश्शिवः ॥ तदेवाक्षरमद्वैतं तदादित्यान्तरं परम् । इति कौर्मे तत्सवितुर्वरेण्यमिति तद्गतः ॥ भावो हि वासरमणेरन्तर्यामिणि योजितः । एवं च यज्ञरट्टाजस्सावित्र्या देवतां रविम् ॥ उवाच तच्च युज्येत स्यान्निर्मूलं तदन्यथा । विश्वामित्रऋषिश्छन्दो गायत्री देवता रविः ॥ इति स ह्यस्मद्विष्णोराचार्यो भगवान् ऋषिः । सवितुर्भर्ग इत्येवमन्वयाङ्गीकृतावपि ॥

सूर्ये सवितृशब्दस्य वृत्तिर्वाच्योदितैर्नयैः । एवं सवितृशब्दार्थस्सहस्रां-शुरिति स्थिते ॥ तत्रासंकुचितास्मद्धीप्रेरकत्वमनन्वायि । तद्वरेण्यं परं ब्र-ह्म तन्मण्डलगतं शिवम् ॥ भर्ग इत्युदितं ज्योतिः श्रूयते तत्पदोदितम् । एवं तत्रापि यच्छब्दे पुंस्त्वं नैवेह युज्यते ॥ तस्मात् क्वचित् भवत्वेषा तु-ल्या लिङ्गान्यथाकृतिः । वस्तुतस्तु तवैवायं भवेदोपोऽन्वयक्रमे ॥ तच्छब्द-लिङ्गाघटनं नैवास्त्यस्माकमन्वये । यच्छब्दप्रतिनिर्देशो नायं तच्छब्द इ-ष्यते ॥ श्रुतस्योत्तरवाक्यस्य पूर्वं तदनपेक्षणात् । अलङ्कारेषु बहुषु तथैव प्रतिपादनात् ॥ तथैव लोके वेदे च वाक्यानामपि दर्शनात् । किं तु ध्यान-क्रियाकर्मभूतस्य परमात्मनः ॥ नामैतत्तच्च गीतासु सुप्रसिद्धं नपुंसकम् । स्ववाक्ये प्रतिनिर्देशवाक्ये वान्वयबोधकम् ॥ भर्गशब्दमपेक्ष्यात्र पुल्लिङ्गम-पि युज्यते । एवं श्रुत्यन्तरस्मर्तृवाक्यजातानुरोधतः ॥ क्वापि लिङ्गान्य-थाभावदोषवैकल्यतोऽपि च । अजन्तत्वेन निर्णीतात् भर्गशब्दान्महेशि-तुः ॥ वाचकात् प्रतिपाद्योऽसौ गायत्र्या इति मीयते । आदित्याश्रय-णीयत्वादपि लिङ्गादिति स्फुटम् ॥ गायत्रीप्रतिपाद्योऽर्थश्शिव इत्यवसीय-ते । तत्तस्यान्तर्यामिणि स्याद्यद्वा तस्याधिदैवते ॥ द्वेधाप्यसाधारण्येन प-र्यवस्येन्महेश्वरे । भास्करस्येश्वरो देव इत्यादिस्मृतिदर्शनात् ॥ सिद्धं तदधिदैवत्वं तदन्तर्यामितोदिता । तदेवं श्रुतिलिङ्गाभ्यां श्रुत्यन्तरबला-दपि ॥ गायत्र्याः प्रतिपाद्योऽर्थः परश्शम्भुरिति स्थिते । देवस्य द्योत-मानस्य निधित्वात् श्रुतिसम्पदाम् ॥ रवेस्तेजःप्रदं ब्रह्म ध्यायामस्तत्प-दोदितम् । यद्भर्गसंज्ञमस्माकं धियः कर्मानुसारतः ॥ प्रेरयत्यन्तरात्मत्वा-दिति मन्त्रान्वयक्रमः । स्याच्चेत्सवितृशब्दस्य भर्गशब्देन योजना ॥ त-स्याप्युत्तरवाक्ये स्यात् तद्वदेव निवेशनम् । देवस्य सवितुर्मध्ये यो भ-र्गो नो धियः क्रमात् ॥ प्रचोदयात्तद्वरेण्यं धीमहीत्यन्वयक्रमः । इत्यसौ याज्ञवल्क्येन सर्वशास्त्रार्थवेदिना ॥ स्वनिर्मिते योगशास्त्रे दर्शितो मु-निनान्वयः । भर्गशब्दात् परस्यामस्स्वादेशस्य तु कल्पने ॥ स्वस्था-न एव स भवेद्विभक्तिव्यत्ययस्य वा । नन्वेवंसति केषांचिदपीणामिह धीमताम् ॥ भर्ग इत्यस्य सान्तत्वव्यवहारस्य का गतिः । न हि सा-न्तोऽयामत्येतदुक्तमस्ति स्मृतौ क्वचित् ॥ प्रयोगो भर्ग इत्येष नेतुं शक्यः स्वसूलवत् । दृश्यते स्मृतिवाक्येषु ह्यागमार्थानुवादिषु ॥ यथाश्रुतानुवादो-ऽपि व्याख्येयस्य सतोऽन्यथा । न तत्र सूर्यो भातीति मन्त्रोऽयं हि य-

थाश्रुतः ॥ अनूदितः पुराणेषु व्याख्यातव्योऽन्यथापि सन् । यस्मिन्न भासते विद्युन्न सूर्यो न च चन्द्रमाः ॥ यस्य भासा विभातीदमित्येषा शाश्वती श्रुतिः । ये विभक्तिव्यत्ययेन यच्छब्देनान्वयेन वा ॥ व्यवहारास्तस्य दृष्टास्तेऽर्थगत्यवलम्बिनः । स्मृतीनां वेदतात्पर्यव्याख्यानपदवीजुषाम् ॥ अर्थगत्यवलम्बो हि श्रेयान् शब्दावलम्बनात् । अत एव न तत्रेति मन्त्रो भगवता स्वयम् ॥ न तत् भासयते सूर्यो न शशाङ्को न पावकः । इत्यर्थमवलम्ब्यैवानूक्तो न तु यथाश्रुतम् ॥ चक्षोस्सूर्य इति श्रौतः पुराणे वैष्णवे मनुः । अक्ष्णस्सूर्योऽनिलः प्राणादित्यनूक्तोऽर्थवीक्षया ॥ इत्येवं स्मृतिकाराणां व्यवहारास्समञ्जसाः । सर्वे तवैवाकारान्तव्यवहारो विरुध्यते ॥ न हि भर्गाख्यमित्यादिव्यवहारः कथंचन । भर्ग इत्यस्य सान्तत्वपक्षे ह्यति समर्थनम् ॥ अस्तु वा सान्त एवायं तथाप्यर्थोऽस्य शङ्करः । तद्वाचकपदस्यैव विकारश्छान्दसो ह्ययम् ॥ किञ्चिद्वर्णविकारेऽपि बहुसारूप्यदर्शने । व्यवस्थितं पूर्वतन्त्रे पदैक्यं लोकवेदयोः ॥*॥ चक्षोस्सूर्यो ब्रह्मैतादित्याशौ निश्रुतात् पदात् । लिङ्गवर्णविकारेऽपि भिन्नत्वं नाभ्युपेयते ॥ यदि सान्तस्य शब्दस्य रूढिस्स्याद्वस्तुनि क्वचित् । तदाह्यजन्तसारूप्यं भवेदैक्याप्रयोजकम् ॥ सरशब्दादिव सरश्शब्दो भिन्नो भवेदयम् । सास्य रूढता क्वचिदपि नेष्यते लोकवेदयोः ॥ नन्वस्य रूढ्यभावेऽपि योगेनान्यत्र वर्तनम् ॥ सम्भवत्येव वृद्धैश्च बहुधा सम्प्रदर्शितम् । भक्तस्नेहात् भाग्यदानात् भर्जनात् भञ्जनात् भृतेः ॥ भाभ्राजिधात्वोर्व्युत्पत्त्या दीप्तिरूपत्वतोऽपि च । मैवं न वर्णविकृतिमनाश्रित्यैव वैदिकीम् ॥ उपपादयितुं शक्या योगास्सर्वेऽपि दर्शिताः । तदाश्रयो विकारोऽयं रूढस्यैवेति युज्यते ॥ रूढेर्योगात् बलीयस्त्वं यतस्सर्वैरुरीकृतम् । नन्वेषु यत्र योगस्स्यादञ्जसा रूपमस्तु तत् ॥ विकारकल्पनाद्रूढौ स एव खलु युज्यते । सत्यं तथापि मन्त्रस्य व्याख्याने ब्राह्मणे स्वयम् ॥ अजन्तोऽनूदित इति प्रागस्माभिरुदाहृतम् । अतः कल्प्यावश्यमेव च्छान्दसी विकृतिः क्वचित् ॥ सान्तेऽजन्तेऽथवा मन्त्रब्राह्मणैकार्थ्यसिद्धये । कल्प्यते सान्त एवैषा नाजन्ते रूढ्यभावतः ॥ रुद्रशब्देन विवृतेराञ्जस्यादीशवाचिना । एवं च स्मृतिकाराणां व्यवहारोऽपि युज्यते ॥ अर्थानुसारतोऽजन्तस्सान्तश्शब्दानुसारतः । पक्षान्तरे त्वकारान्तव्यवहारो न युज्यते ॥ न ह्यसौ शब्दमर्थं वा व्याख्येयस्य निरीक्षते । तस्मात् सकारान्तत्वेऽपि शिवस्यैवैष वाच्य-

---

॥*॥ इत्यर्थो याज्ञवल्क्येन दर्शितो मुनिनान्वयः । इत्यधिकः पाठः ॥ १. रूढिलाभत इति पा० ॥

कः ॥ छान्दसेन विकारेण तच्छक्तेरपरिक्षयात् । यो देवस्सवितास्माकं धियो धर्मादिगोचराः ॥ प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे । देवस्य सवितुस्तस्य धियो यो नः प्रचोदयात् ॥ भर्गो वरेण्यं तद्ब्रह्म धीमहीत्यर्थ उच्यते । इत्येवमादिकस्सर्तृवचस्स्वारस्यलाभतः ॥ विधान्तरेण गायत्र्या मन्वते येऽन्वयक्रमम् । तन्मतेऽपि शिवादन्यन्नास्याःसिध्यति दैवतम् ॥ भर्गश्रुतेश्च सवितुर्वरेण्यत्वस्य चान्वयात् । कैश्चित्सवितृशब्दस्य ब्रह्म चेदर्थ इष्यते ॥ सर्वान्तर्यामितालिङ्गात्तथाप्यस्मन्मतं दृढम् । स्थापितं चैतदादित्यपुराणे रविणा स्फुटम् ॥ गायत्र्याश्शिवमन्त्रत्वमित्थं न्यायोपबृंहितम् । ततो दर्भासने स्थित्वा गायत्रीं प्रजपेद् द्विजः ॥ गायत्र्याः परमं तत्त्वं देवदेवो महेश्वरः । इति ज्ञात्वा जपेद्विद्वान् गायत्र्याः फलमश्नुते ॥ यो ह्यन्यथा हि मनुते गायत्रीं शिवरूपिणीम् । स पच्यते महाघोरे नरके कल्पसङ्ख्यया ॥ तथा कौर्मे पुराणेऽपि विष्णुना कूर्मरूपिणा । स्वयं प्रदर्शिता शम्भोर्गायत्रीप्रतिपाद्यता ॥ एवं हि श्रूयते तत्र राजवंशानुकीर्तने । राजा वसुमना नाम्ना रविमण्डलमध्यगम् ॥ समुपासिष्ट गायत्र्या पुरुषं रुक्मविग्रहम् । अनुग्रहार्थमस्याथ भगवान् परमश्शिवः ॥ आविर्भूय रवेर्बिम्बादस्मै रूपमदर्शयत् ॥ शिवशक्तिमयं दिव्यं चन्द्रार्धकृतशेखरम् । त्रिलोचनं नीलकण्ठं ब्रह्मेन्द्रोपेन्द्रवन्दितम् । अनुगृह्य च तत्कालं देहान्तेऽदान्निजं पदम् ॥ तुष्टश्चिरतरं तस्य गायत्र्याराधनादिति ॥ अत्र केचन मन्यन्ते विष्णुसंज्ञमिति श्रुतिः ॥ काचित् वरेण्यं सवितुर्भर्गो विष्ण्वभिधं जगौ ॥ ततश्च विष्णुरेवार्थो गायत्र्या इति तल्लघु ॥ तस्य रुद्रत्वबोधिन्यामपि सत्यां कुतो ह्ययम् । निर्णयस्स्यान्न्यायदृष्टो शिव एवेति निर्णयः ॥ शिवेऽपि विष्णुसंज्ञायाश्शाखायामनुशासनात् ॥ शिवतत्त्वादि भूम्यन्तं शरीरादि घटादि च ॥ व्याप्याधितिष्ठति शिवस्तस्माद्विष्णुरुदाहृतः । भगवान् भगसद्भावात् निर्मलत्वात् शिवस्स्मृतः ॥ स्वामी स्वमस्य यत्सर्वं विष्णुस्सर्वप्रवेशनात् । इति तत्र निरुक्तेश्च तस्य वायूक्तलैङ्गयोः । तन्नामाष्टकमध्ये च गणनादागमादिषु । श्रुत्यन्तरेषु गायत्रीप्रतिपाद्ये प्रयुक्तयोः ॥ मुख्यत्वासम्भवात् विष्णौ शिवरुद्राभिधानयोः । विद्यमाने विवरणे मन्त्रलिङ्गाविरोधिनि ॥ तद्विरुद्धार्थनिष्ठस्य दौर्बल्याच्चेति सिध्यति ॥ नन्वाश्वमेधिके कृष्णवचनं पाण्डवं प्रति ॥ तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ॥ उदित्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ॥

गायत्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ॥ इतिगायत्र्युपास्यत्वं दर्शयत्यसुरद्विषः ॥ मैवं सन्ध्यासु भगवद्भक्तैर्भास्करमण्डले ॥ उपास्या भगवन्मूर्तिरित्येतान्नत्परं वचः ॥ न तु गायत्र्युपास्यत्वपर्यन्तस्थापनक्षमम् । न हि श्रुतिविरुद्धेऽर्थे तात्पर्यं तस्य युज्यते । ततः प्राचीनवचने वैष्णवो हि षडक्षरः । ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् । इति जप्य उपन्यस्तः तदर्थो रविमण्डले । ध्येयो विधीयतेऽनेन श्लोकेनेति न वैशसम् ॥ सर्वेषामेव देवानां सन्ध्यासु रविमण्डले ॥ भक्तैरुपासनं कार्यं तत्तत्तन्त्रेषु विश्रुतम् । किंच तत्र स संवादः कृष्णपाण्डुतनूजयोः ॥ वैष्णवागमधर्माणां विधानाय प्रवर्तितः ॥ भगवन् वैष्णवा धर्माः किंफलाः किंपरायणाः ॥ कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशस्तु ते । कथं वैखानसा ब्रूयुः कथं वा पाञ्चरात्रिकाः ॥ एवमेतत्पुरावृत्तं वैष्णवं धर्मशासनम् । इति तत्रादिमध्यान्तवचनैरवसीयते । श्रुता मे मानवा धर्मा इति तेभ्यो विभिद्य यः ॥ युष्मदीयान् वरान् धर्मान् पुण्यान् कथय मेऽच्युत ॥ इति प्रश्न उपक्रान्तिगतस्तेनाप्यतिस्फुटम् । वेदोक्तेनैव खल्वाहुर्धर्मान् सन्तो मनूदितान् । श्रौतान्वर्णाश्रमाचारानुपदिश्य प्रपाञ्चतः । इत्येष मानवो धर्मो युष्माकं कथितो मया । इत्युक्तिश्चोपसंहारे व्यासगीतासु दृश्यते । प्रसिद्धा च मनूक्तीनां वैदिकाचारनिष्ठता । तथापि मानवाद्धर्मजातादन्यत्वनिश्चये । विष्ण्वागमास्थिता धर्मास्तन्त्रोक्ता इति गम्यते । ततस्तद्वैष्णवं धर्मशास्त्रमित्यपि गीयते ॥ एवञ्चागमनिष्ठेन गायत्र्या विष्णुचिन्तना । कर्तव्येति न तत्कार्यं वैदिके वर्त्मनि स्थितैः । क्वचित्तन्त्रानुरोधेन धर्मान् पौराणिका अपि । वदन्ति तादृशोऽशंस्तु ग्राह्यस्तन्त्रावलम्बिना । यत्तु तन्त्रानुसारेण कथितं तत्परित्यजेत् । धर्मशास्त्रे पुराणे च यत्नतो वैदिको जनः । इति स्मर्तृभिरेवात्र व्यवस्थायाः प्रदर्शनात् । तस्मादागमनिष्ठानामाचारविकृतावपि ॥ वेदनिष्ठैस्सदा कार्यं गायत्र्या शिवचिन्तनम् । ध्यानप्रधानमेवैतत्सन्ध्याकर्म यतः श्रुतम् । यस्तु श्रीपार्वतीनाथपदाम्भोजपराङ्मुखः । वैदिकं मार्गमास्थाय तत्कर्माण्यनुतिष्ठति । न तस्य तानि कस्यैचित् कल्पन्ते फलसिद्धये । परिधानविहीनानि मण्डनानि नृणामिव । यतस्तानि वितन्यन्ते विना गायत्र्युपासनम् । शिवोपास्तिविहीनैस्तैरिति तात्पर्यसङ्ग्रहः ॥५९॥

इति गायत्र्यादिशिवपरत्वनिरूपणम् ।

द्विजातिष्वपि ब्राह्मणानां शिवभजनमेवावश्यकमित्याह—

यदग्नौ विप्राणामुपदिशति दैवं यदपि तं
तदन्तर्यामित्वं तरुणशशिभूत प्रथयति ।
श्रुतिस्मृत्याम्नातं वचननिकुरुम्बं द्विविधय-
त्यदस्सम्भूय त्वां वदति कुलदैवं गिरिश नः[1] ॥ ९६ ॥

यजुस्संहितायां तावत्—'आग्नेयो वै ब्राह्मणो देवतया' इति ब्राह्मणानाम-ग्निर्देवतेति श्रावितं, बृहदारण्यके च 'तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणेन मनुष्येष्वि'ति आराध्येषु देवेष्वग्नेः, आराधकेषु मनुष्येषु ब्राह्मणस्य च ब्रह्मरूपैकजातिसंबन्धोपन्यासेनायमर्थस्सूचितः । अत एव च्छन्दोगोपनिषदि स्फुटीकृतः— 'त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामी'ति । 'गुरुरग्निर्द्विजातीनामि'त्यादिस्मृतयश्चास्मिन्नर्थे दृश्यन्ते । तस्मादग्निः ब्राह्मणैरवश्यमाराधनीय इति निर्विवादमेतत् । तदन्तर्यामित्वं च शिवस्य श्रुतिस्मृत्युदाहरणेन व्यवस्थापितमधस्तात् । तथाचाग्निर्ब्राह्मणानां देवतेति प्रतिपादकवचनानाम् अग्नेः प्रतिमन्वन्तरं भेदेन कल्पान्तराराधितस्य कल्पान्तरे फलदातृत्वायोगात् तदन्तर्यामिणो देवतात्वप्रतिपादने पर्यवस्यताम् । कस्तदन्तर्यामीति विशेषाकाङ्क्षायाम् आकाङ्क्षितविशेषसमर्पकैः शिवस्य तदन्तर्यामित्वप्रतिपादकैः वचनजातैः संभूय शिवस्य ब्रह्मकुलदेवतात्वप्रतिपादने तात्पर्यविश्रमात् विशेषात् ब्राह्मणैरग्न्यन्तर्यामी शिवस्समाराधनीय इति भावः । तदाराधनं चाग्निसाध्यनित्यकर्मण्येव । अत एव स्मृतिः—'तस्मादग्निमुखे यत्तु दत्तं स्याद्येन केनचित् । तत्सर्वं रुद्रमुद्दिश्य दत्तं स्यान्नात्र संशयः ॥' इति । एवञ्च 'आग्नेयो वै ब्राह्मण' इति श्रुतिमूलायाम् 'अग्नौ तिष्ठति विप्राणां दिवि देवो मनीषिणाम् ।' इत्यादिस्मृतौ 'अहमग्निशिरोनिष्ठ' इत्यादिवचनान्तरप्रतिपन्नाग्न्यवस्थानशिवाभिप्रायेण अग्नौ तिष्ठतीति भेदनिर्देशोऽपि सङ्गच्छते । अन्यथाह्यग्नेरेव देवतात्वे भेदनिर्देशो विरुध्येत । यश्चाग्निब्राह्मणयोरेकजातियोगोपन्यासः, सोऽपि तदन्तर्याम्यभिप्रायेणेति च्छान्दोग्ये स्फुटम् । तत्र 'त्वं देवेष्वि'त्यतः प्राक् 'विरूपाक्षोऽसि दन्ताञ्जिरि'ति तदन्तर्यामिणश्शिवस्य प्रस्तावात् । न चाग्नावेव विरूपाक्षशब्दः कथंचिद्योज्यतामिति वाच्यम् । प्रसिद्ध्यतिलङ्घनापत्तेः । प्रपदस्याग्न्यन्तर्यामिरुद्रपरत्वेऽपि 'आवो राजानमि'ति मन्त्रस्येवाग्निपरत्वप्रसिद्ध्यविरोधाच्च । अत एव भाष्यकारेण तस्य रुद्रात्मकोऽग्निर्देवतेत्युक्तम् । कूर्मपुराणे यद्यपि 'प्रपद्ये त्वां विरूपाक्षं भूर्भुवस्स्वस्स्वरूपिणम् । हिरण्मये गृहे सुप्तं महान्तममितौजसम् ॥' इति प्रपदार्थो वह्न्यष्टके दर्शितः । तथापि तत्र वह्न्यष्टकमपि

१. गिरिश कुलदैवं वदति नः इति पाठान्तरम् ॥

तदन्तर्यामिशिवाभेदेन तत्स्तुतिपरं प्रवृत्तमिति न दोषः। अत एव तत्र 'प्रपद्ये शरणं रुद्रं महाग्रासं त्रिलोचनम् । योगिनं कृत्तिवसनमीशानं कालरूपिणम् ॥' इत्यादि व्यवहारः । एवं च 'ब्राह्मणो भगवान् रुद्र' इत्यादि यत्पराशरादिवचनं, भागवते 'न नो गर्भमिमं ब्रह्मन् भूतानामृषभोऽवधीत् ॥ रुद्रः पतिर्हि भूतानां यस्याकरवमंहसः ॥ नमो रुद्राय महते देवायोग्राय मीढुषे। शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥' इति रुद्रकोपेन स्वगर्भस्याहानिं प्रार्थयन्तीं दितिं प्रति एतद्गर्भोत्पन्नौ द्वावपि पुत्रौ नारयणो हनिष्यतीति काश्यपेनोक्ते 'वधं भगवता साक्षात्सुनाभोदरबाहुना ॥ आशासे पुत्रयोर्मह्यं मा क्रुध्यात् ब्राह्मणात् प्रभोः। न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च । 'नारक्याश्चानुगृह्णन्ति यां यां योनिमसौ गतः ।' इति विष्णुना स्वपुत्रयोर्वधमङ्गीकृत्यापि रुद्रकोपाग्निना तयोर्भस्मीभावाभावं प्रार्थयन्त्याः पुनरपि तस्याः यद्रुद्रस्य ब्राह्मणत्वोपवर्णनं, तत्सर्वं 'मग्निर्वै देवेषु, त्वं देवेषु' इत्यादिप्रत्यक्षश्रुतिमूलकमुपपद्यते। तस्मादग्नेर्ब्राह्मणदैवतात्वप्रतिपादकश्रुतीनां शिवस्य तद्दैवतात्वप्रतिपादने तात्पर्यं वज्रलेपायते ॥९६॥

किञ्च कूर्मपुराणे—'नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः । विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृत् ॥' इति श्रवणात्, तत्रैव युगधर्मप्रकरणे 'ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः ॥ द्वापरे दैवतं विष्णुः कलौ देवो महेश्वरः ॥' इतिश्रवणात् 'तस्मात्सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम्। विशेषात् ब्राह्मणो रुद्रमीशानं शरणं व्रजेत् ॥' इति कलियुगोत्पन्नस्य ब्राह्मणस्य विशेषेण शिवभजनस्यावश्यकत्वप्रतिपादनात् पराशरवासिष्ठलैङ्गादिष्वपि उक्तार्थस्य व्यवस्थापनाच्च अधुना ब्राह्मणैर्नित्यं शिवाराधनमवश्यं कर्तव्यम्, तत्त्यागेन देवतान्तराश्रयणं कर्मान्तरानुष्ठानं च निष्फलं विपरीतफलं वा आपद्यते । 'यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवती'ति श्रुतेः, 'नार्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम् । तेषां दानं तपो यज्ञो वृथा जीवितमेव च ॥ इतः पूर्वं कृतं कर्म भवद्भिरखिलं वृथा । लिङ्गार्चनं विना तेन मोहिता देवमायया।' इत्यादिव्यासपितामहादिवचनात् । तदेतत्सर्वमभिप्रेत्याह—

गतिस्त्वं प्राप्तानां पुरहर जनिं ब्राह्मणकुले<br>विशेषादेतस्मिन् युग इति पुराणेषु विदितम् ।<br>अतस्त्यक्त्वैव त्वां जडमतिरुपास्ते यमपरं<br>स विप्रः पापीयान् भव तमपि देवं न लभते ॥९७॥

एवं संसारित्वोपाधिना शिवनियमितयावत्स्वस्वकृत्यानुष्ठानलक्षणं, मनु-

ण्यत्वोपाधिना तद्भक्तिलक्षणं, द्विजत्वोपाधिना सवितृमण्डले तद्ध्यानलक्षणं, ब्राह्मणत्वोपाधिना अग्निसाध्यकर्मानुष्ठानलक्षणं, कलियुगोत्पन्नत्वादिना तदर्चनादिलक्षणं च तदाराधनमस्मदादीनां नित्यमिति व्यवस्थापितम् ॥९७॥

अथ यो यदर्थयते, तस्यापि तदर्थं शिवाराधनमेव कर्तव्यमिति सामान्यतो व्यवस्थापयति—

सहिष्णुस्त्वं तावत्परमशिव भावैकसुलभः
प्रसादस्ते हस्ते कृत इव झटित्येव भजताम् ।
ददासि त्वं स्वामिन् प्रणतजनवाञ्छासमधिकं
त्वदीयं विश्वं तद्भातिरिह बुभूषोरपि भवान् ॥९८॥

फलार्थं सेवमानेन तावत्सहिष्णुरेव सेवनीयः । आश्रितानां भ्रान्त्यज्ञानप्रमादादिप्रभवानामागसामवर्जनीयत्वेन प्रभोरसहिष्णुत्वे चिरकृताया अपि सेवाया वैफल्यप्रसङ्गात् । वदन्ति च नीतिविदः—'त्यागशीलः प्रभुस्सेव्यस्त्यागशीलात् प्रियंवदः । प्रियंवदाद्विशेषज्ञो विशेषज्ञात् क्षमापरः ।' इति । सहिष्णुत्वं च शिवस्य प्रसिद्धं—'नमस्सहमानाय, अषाढाय सहनाय मीढुष'इत्यादिषु । सहिष्णोरपि बहुक्लेशाधीनप्रसादस्याश्रयणं दुष्करम् । शिवस्तु भावैकसुलभः । 'भावग्राह्यमनीडाख्यं भावाभावकरं शिवमि'ति मन्त्रोपनिषदि श्रवणात् , 'कृतकृत्यस्य तृप्तस्य मम किं क्रियते नरैः । बहिर्वाभ्यन्तरे वापि मया भावो हि गृह्यते ।' इति शिववचनाच्च । भक्तिमात्रावर्जनीयोऽपि चिराश्रयणप्रसाद्यः क्षुद्रेऽपि कर्मण्यन्तरायबहुलेन जनेनाश्रयितुमशक्यः । शिवस्तु शीघ्रप्रसादः । तथात्वस्य शिवपुराणे बहुशः प्रतिपादनात्, भागवतेऽपि दशमस्कन्धे ब्रह्मादिभ्यस्तस्याशुतोषत्वव्यवस्थापनाच्च । शीघ्रप्रसादोऽप्यल्पफलप्रदः न बहुफलार्थिभिस्सेव्यः । शिवस्तु वाञ्छाधिकफलप्रदः। यस्स्वभक्तेभ्यो नारायणयक्षराजादिभ्यस्स्वस्मादप्यधिकत्वप्रत्ययकरं शौर्यैश्वर्यादिकं प्रायच्छत् । बहुप्रदानरसिकोऽप्यपेक्षितफलस्याप्रभवन्न सेव्यः । शिवस्तु सर्वस्य पुरुषार्थजातस्येष्टे, यतो विश्वमेतत्तन्नियन्तृकम् । स एव हि समग्रैश्वर्यविश्रान्तिभूमिः । अन्येषां तु तत्प्रसादलब्धं परिच्छिन्नमैश्वर्यमिति असकृदावेदितम् । तथा च सर्वेषां फलार्थिनाम् 'एकाहाद्वा तेषां समत्वादि'ति न्यायेन तस्मादेव तत एवाकाङ्क्षणं युक्तम् । तस्मात् फलार्थिसेवाप्रयोजकसकलकल्याणगुणसम्पूर्णत्वात् सर्वेश्वरत्वेन सर्वार्थितवितरणशक्तित्वाच्च फलार्थिभिरपि शिव एवाराधनीय इति भावः ॥९८॥

एवं सामान्यतस्सकलार्थिभजनीयत्वं शिवस्य व्यवस्थापितम् । अधुना विशिष्यापि तत्तत्फलोत्कर्षार्थिभिस्तस्य भजनीयत्वं श्लोकद्वयेन व्यवस्थापयति—

महेश त्वत्पादाम्बुरुहयुगलासक्तमनसां
महाभोगोत्कर्षः प्रथित इह तावत् सुकृतिनाम् ।
परत्रास्तामन्यद्भवदनुचराणामपि पदं
हरिब्रह्मादीनामुपरि कथयन्त्यागमविदः ॥५९॥

लोके पुरुषैरर्थ्यमानं हि फलं द्विविधं—प्राकृतम्, अप्राकृतं च । आद्यमपि द्विविधम्—ऐहिकं, पारत्रिकं चेति । तत्रैहिकं तावत् शिवाराधनेन सर्वोत्कृष्टं प्राप्यत इति 'भवनानि मनोज्ञानि विभ्रमामरणास्स्त्रियः ॥ धनं (च तृप्ति)चादृष्टपर्यन्तं शिवपूजाविधेः फलम् ।' इत्यादिषु प्रसिद्धम् । प्रपञ्चितं चातितरां शिवधर्मे । भागवतेऽपि—'देवासुरमनुष्येषु ये भजन्त्य(शिवं)निशं शिवम् । प्रायस्ते धनिनो भोज न तु लक्ष्म्याः पतिं हरिम् । एतद्वेदितुमिच्छामि सन्देहोऽत्र महान् हि नः । विरुद्धशीलयोः प्रभ्वोः विरुद्धा भजतां गतिः ।' इति सेव्यमानप्रभुशीलविरुद्धौ शिवविष्णुभक्तानां भोगोत्कर्षापकर्षौ कथमिति राज्ञः प्रश्नेन शुकस्य तेषां तदुत्कर्षापकर्षमभ्युपगम्यैव कथञ्चित्तदुपपादकोपन्यासात् विरोधसमाधानेन च दृढीकृतम् । पारत्रिकमपि 'ये मामेकान्तभावेन देवं त्र्यम्बकमेव वा ॥' इत्यादिना 'यान्त्येव मम लोकं वा रुद्रलोकमथापि वा ।' इत्यन्तेन वैष्णवधर्मशास्त्रीयभगवद्वचनेन दर्शितम् । रुद्रलोके प्राप्यं सर्वोत्कृष्टमिति वक्तव्यम् । यः खलु 'यमाहुस्सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम् ॥ अनादिनिधनं देवं प्रभुं नारायणं परम् । ब्रह्मणस्सदनात्तस्य परं स्थानं प्रकाशते । ब्रह्मलोकमतिक्रम्य विष्णुलोके महीयते ।' इत्यादिभिः पौराणिकवचनबोधायनसूत्रादिभिः ब्रह्मलोकादुपरितनत्वेन प्रतिपादितात् मोक्षधर्मोपदर्शितप्रमोदनवैकुण्ठसम्मोदनानिरुद्धादिस्थानचतुष्टयविराजमानाद्विष्णुलोकादपि उपरितनः । तथा हि काशीखण्डे प्रतिपादितम्—'उपरिष्टात् क्षितेरष्टौ कोटयस्सत्यमीरितम् ॥ सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥ भूलोकात्परिसङ्ख्यातः[1] कोटिषोडशसम्मितः ॥ यत्रास्ते श्रीपतिस्साक्षात्सर्वेषाममयप्रदः ॥ ततस्तु षोडशगुणः कैलासोऽस्ति शिवालयः । पार्वत्या सहितश्शम्भुर्गजास्यस्कन्दनन्दिभिः ॥ यत्र तिष्ठति सर्वेशः सकलस्स परस्स्मृतः । तदेव तस्य लोकोऽयं स्वलीलामूर्तिधारिणः ॥ स विश्वेश इति ख्यातस्तस्याज्ञाकृदिदं जगत् ॥' इति । वायवीयेऽपि ब्रह्मविष्णुलोकाभ्यामुपरितनत्वेन अधिकैश्वर्यत्वेन च शिवलोकः प्रतिपादितः । स एव च शिवभक्तैः प्राप्यः । शिवधर्मोत्तरेऽपि विकलाङ्गादिरूपशिवपूजाप्राप्यान् विष्णुलोकान्तान् सर्वान् लोकानुपवर्ण्यानन्तरं दर्शितं—'ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपदं महत् ॥ भोगसंस्थानमतुलं

१. भूलोकोपरि संख्यात इति पाठान्तरम् ।

कर्मयोगरतात्मनाम् ॥ अप्रमेयगुणैर्दिव्यैर्विमानैस्सूर्यसन्निभैः ॥ असङ्ख्यैस्तत् पुरं व्याप्तं सर्वप्राण्युपकारकैः ॥ सहस्रभूमिविस्तीर्णैस्सूर्यकोटिसमप्रभैः । रुद्रलोकमिति प्रोक्तमशेषगुणसंयुतम् । सर्वेषां शिवभक्तानां तत्पुरं परिकीर्तितम् । रुद्रक्षेत्रमृतानां च जङ्गमस्थावरात्मनाम् ॥' इति वचनात्, तत्रैव प्रदेशान्तरेऽपि 'श्रीमच्छिवपुरं दिव्यमैश्वरं सार्वकामिकम् । शिवेन शिवभक्तानां कल्पितं वैष्णवात् परम् ॥' इति वचनाच्च । अयं तु शिवलोकः कर्मभक्तियोगरतानाम् । 'ये त्वहंग्रहोपासनारूपशिवध्यानासक्ताः तत्क्रतुन्यायेन शिवसायुज्यं प्राप्य 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रोक्तरीत्या शिवसमभोगभाजो भवन्ति, तेषां परमशिवनित्याविर्भावस्थानभूतः ततोऽप्युपरितनः परमशिवलोकश्शिवधर्मोत्तर एव 'इत्येतदपरं प्रोक्तं श्रीमच्छिवपुरं महत् ॥ देहिनां कर्मनिष्ठानां पुनरावर्तनं स्मृतम् ।' इति कर्मयोगादिप्राप्यपूर्वोक्तशिवलोकवर्णनं समाप्य 'ऊर्ध्वं शिवपुरात् ज्ञेयं स्थानत्रयमनुत्तमम् ॥ नित्यं परमशुद्धं च स्कन्दोमाशङ्करात्मकम् ॥' इत्युपक्रम्य 'शुद्धस्फटिकसङ्काशं जटामकुटभूषितम् । त्र्यक्षं चतुर्भुजं शान्तमक्षमालाधरं हरम् । वरदाभयहस्तं च त्रिशूलासक्तपाणिकम् । ध्यायमानश्शिवं नित्यं शिवसायुज्यमाप्नुयात् ॥ ये संप्राप्ताः परं स्थानं ध्यानयोगरता नराः । तेषां न पुनरावृत्तिर्घोरे संसारसागरे ॥ सर्वज्ञाः सर्वगाश्शुद्धाः परिपूर्णा महेश्वराः ॥ शिवतुल्यबलोपेताः परं शिवपुरं गताः ॥' इति प्रतिपादनात् । आस्तामयं शिवसायुज्यं प्राप्तानां भोगोत्कर्षः । ये तु 'गीतिज्ञो यदि योगेन' इत्यादियाज्ञवल्क्याद्युक्तरीत्या शिवप्रसादहेतुगानविद्याद्यभ्यासेन तत्फलं शिवानुचरत्वं प्राप्ताः, तेषां पदमपि ब्रह्मादिभ्यश्श्रेष्ठं वदन्ति । स्मरन्ति हि पौराणिकाः—'भिन्दन्ति शैलानुदधीन् पिबन्ति व्यत्यासयन्ति क्षितिमन्तरिक्षम् । तृणीकृतब्रह्मपुरन्दराणां किं दुष्करं शङ्करकिङ्कराणाम् ।' इति । 'ते हि साक्षाद्दिविषदो ह्यन्तरिक्षसदस्तथा ॥ पृथिवीषद इत्येते विज्ञेयास्त्रिविधा गणाः ॥' इत्यादिपुराणोपबृंहिता देवव्रतरुद्रोपनिषदादयश्च तेषामपरिमितं महिमानं ख्यापयन्ति । 'द्वितीयं जप्त्वा गाणापत्यमवाप्नोती'ति अथर्वशिरश्च महाफलप्रायपाठे रुद्रानुचरत्वं कीर्तयत् देवतान्तरानुचरभावात् तस्यातितरामुत्कर्षं स्फुटयति । न हि 'वैष्णवं वामनमालभेत, विष्णुरेव भूत्वेमान् लोकानभिजयति, एतासामेव देवतानां सायुज्यं गच्छति' इत्यादिदेवतान्तराणां सायुज्यस्यैव तदनुचरभावस्य महाफलत्वेन श्रवणमस्ति । तस्मादैहिकं पारत्रिकं चाभ्युदयरूपं प्राकृतं फलं शिवाराधनेन सर्वोत्कृष्टं प्राप्यत इति स्थितम् ॥५९॥

निश्रेयसरूपे अप्राकृतफले अभ्युदयवदुत्कर्षापकर्षाभावेन तत्र

१. सर्वकामिकैः । इति पाठान्तरम् ।

शिवाराधनस्यान्तरङ्गोपायत्वलक्षणं देवतान्तराराधनाद्विशेषं स्थापयति--

सुखं तद्भूमाख्यं निरतिशयमप्राकृतमपि
प्रसादायत्तं ते हर भवमहारोगभिषजः ।
उपायोऽत्र ज्ञानं खलु शिव विशुद्धात्मविषयं
प्रसादे सत्येव प्रभुतिलक ते तच्च भवति ॥ ७० ॥

'अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि योऽस्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ।' इति गर्भोपनिषदि, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य' इति, 'अजात इत्येवं कश्चित् भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यमि'ति च मन्त्रोपनिषदि, 'सद्योजातं प्रपद्यामी'ति महोपनिषदि च शिवप्रपदनस्य मोक्षोपायत्वं श्रुतम् । 'अथ हैनं ब्रह्मचारिण ऊचुः किञ्जप्येनामृतत्वं ब्रूहीति सहोवाच याज्ञवल्क्यः शतरुद्रीयेणेति एतानि हवा अमृतस्य नामधेयानि एतैर्हवा अमृतो भवती'ति जाबालोपनिषदि शिवनामकीर्तनस्य तदुपायत्वं श्रुतम् । 'यावच्छशाङ्कशकलामलबद्धमौलिर्न प्रीयते पशुपतिर्भगवान् महेशः । तावज्जरामरणजन्मशताभिघातैर्देहानि दुःखपिहितानि समुद्वहन्ति ॥ दिवसकरशशाङ्कवह्निनेत्रं त्रिभुवनसारमपारमाद्यमीशम् । अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शान्तिम् ॥' इत्यादिमहाभारते, 'यस्यानवद्यं चरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः । यत्पादपद्मं महतां मनोभिर्निषेव्यते ब्रह्मरसासवार्थिभिः ॥ त्वमेकस्सर्वजगतामीश्वरो बन्धमोक्षयोः । तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥' इति भागवते, 'नामानि ये महेशस्य गृणन्त्यज्ञानतोऽपि वा ॥ तेषामपि शिवो मुक्तिं ददाति किमतः परम् । व्याधीनां भेषजं यद्वत् प्रतिक्षेपस्स्वभावतः । तद्वत् संसारदोषाणां प्रतिक्षेपश्शिवस्स्मृतः ॥' इति शिवपुराणादिषु च श्रुतम् । एतैः प्रमाणैश्शिवाराधनस्यान्तरङ्गमोक्षोपायत्वमवसीयते । ननु, 'आरोग्यं भास्करादिच्छेत् श्रियमिच्छेद्धुताशनात् । ईश्वरात् ज्ञानमन्विच्छेत् मोक्षमिच्छेत् जनार्दनात् ।' इति स्मृत्या विष्णवाराधनं साक्षान्मोक्षोपायः, शिवाराधनं तु मोचकज्ञानसम्पादनद्वारेति निर्णयादुदाहृतवचनानि परम्परया तस्य तदुपयोगपराणीति न तस्यान्तरङ्गोपायत्वसिद्धिरिति चेत्, सत्यं गृह्णीम एतत्—ज्ञानद्वारा शिवाराधनं मोक्षसाधनमिति । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु 'रुद्रस्तारकं ब्रह्म व्याचष्ट इति जाबालोपनिषद्यविमुक्तोपासकानां शिवात्संसारतारकप्रणवरूपमहावाक्यार्थज्ञानरूपलाभप्रतिपादनात्; 'स नो देवश्शुभया स्मृत्या संयुनक्त्वि'तिमहोपनिषदि शिवं प्रस्तुत्य श्रवणाच्च । अत्र हि स्मृतिशब्देन मोचकस्साक्षात्कार एव विवक्षितः । 'स्मृतिलम्भे सर्व-

ग्रन्थीनां विप्रमोक्ष' इति छान्दोग्ये तत्र स्मृतिशब्दप्रयोगात्, विस्मृतकण्ठगतचामीकरप्रबोधकवाक्यजन्यज्ञानवत् स्वतःप्राप्तार्थविषयत्वेन तत्र स्मृतिशब्दस्य लक्षणोपपत्तेश्च । अत एवैतत्प्रतिबोधकवाक्ये स्मारकत्वव्यवहारो लौकिकानाम् । 'ईश्वरात् ज्ञानमन्विच्छेत्' इत्युदाहृतस्मृतावपि प्रतिपादनाच्च । ज्ञानं हि मोचकपरमात्मसाक्षात्कार एव । 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।' इति अमरकोशे दर्शनात्, 'आत्मार्थमुच्यते ज्ञानं योगाभ्यासस्तपःक्रियाः । विद्याकल्पपरिज्ञानं विज्ञानं ब्रुवते बुधाः ॥' इति बृहस्पतिस्मरणाच्च । विष्ण्वाराधनस्य साक्षान्मोक्षसाधनत्वं तु कुतः । न खल्वभ्युदयवत् कर्मसाध्यो मोक्षः । अविद्यास्तमयलक्षणस्य तस्य श्रुतिस्मृतिन्यायैर्ज्ञानैकसाध्यत्वनिश्चयात् । तस्मात् 'मोक्षमिच्छेत् जनार्दनादि'तिस्मृतिरपि शिवाराधनस्य मोचकप्रतिपादकत्ववचनजातवत् परम्परयोपयोगपरा वर्णनीया । तथा च उदाहृतस्मृतौ वचनान्तरेषु च केषुचित् मोक्षसाधनतया अव्यवहितपर्वणि प्रतीयमानस्यापि विष्ण्वाराधनस्य उक्तन्यायेन तत्र निवेशासम्भवात् स्वस्थानाच्चलितस्य ज्ञानपार्ष्ठिकान्वयं प्राप्तस्य साद्यस्कसवनीयन्यायेन स्थानितया शिवाराधनस्य प्राबल्येन तद्विरोधात्तत्रापि साक्षादन्वयमलभमानस्य ततोऽप्यधस्तनपर्वणि निवेशे 'ओङ्कारस्य प्रसादेन विष्णोश्चैव प्रसादतः । रुद्राराधनवाञ्छा स्यात्तदाराधनतत्परः । ज्ञानमानन्दमद्वैतं परं ब्रह्माधिगच्छति ॥' इति सूतसंहितोपबृंहितेन 'ओङ्काररथमारुह्य विष्णुं कृत्वाथ सारथिम् । ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ।' इति नादोपनिषन्मन्त्रेण, 'त्वामनाश्रित्य विश्वात्मन्न योगी मामुपेष्यती'ति विष्णुं प्रति वरदातुश्शिवस्य कौर्मपठितवचनेन अन्यैश्च पराशरपुराणादिश्रुतैर्बहुभिर्वचनैस्सिद्धा शिवारिराधयिषासंपादनद्वारिका, 'यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः । ततो धनं त्यजन्त्यस्मद्धजनात् दुःखदुःखितम् ॥' इत्यादिभागवतोक्तक्रमेण मोचकज्ञानार्थप्रवृत्त्युपयोगिवैराग्यसम्पादनद्वारिका वा प्रणाडी फलमिति 'मोक्षमिच्छेत् जनार्दनादि'ति स्मरणस्य तदन्ते सर्वमिच्छेत् गणाधिपादि'ति विनायकाराधनस्य आरोग्यादिश्लोकत्रयपरिगणितयावत्फलस्मरणवत्परम्परया उपयोगेऽप्यविरोधादिति सर्वथा देवतान्तराराधनाच्छिवाराधनस्य मुक्तावन्तरङ्गोपायत्वं वज्रलेपायते । एतदेवाभिप्रेत्य सौरपुराणे पठ्यते—'क्रमेण लभ्यतेऽन्येषां मुक्तिराराधनाद्विजाः ॥ आराधनान्महेशस्य तस्मिन् जन्मनि मुच्यते ॥' इति । अत्र तस्मिन् जन्मनीति प्रकृष्टभक्तिपूर्वकज्ञानार्थशिवाराधकपुरुषधौरेयविषयम् । अन्यविषये 'अल्पभावोऽपि यो मर्त्यस्सोऽपि जन्मत्रयात् परम् । न योनियन्त्रपीडायै भविष्यति न संशयः ॥' इति शैवोपदेशात् । नन्वस्त्वेवं निर्गुणब्रह्मवादे व्यवस्था, सगुणब्रह्मवादे मोक्षमिच्छेदित्यत्र स्वस्थानाच्चलनं न कर्तव्यमिति चेन्न ।

तत्रापि मुक्तेः परमपुरुषार्थत्वसिद्धये विश्वाधिकसायुज्यरूपत्वस्य च वक्तव्यतया 'दिनकृत्कोटिसङ्काशं स्थानमाद्यमुपापतेः ।' इत्यादिपौराणिकवचननिचयोपवर्णितपूर्वश्लोकव्याख्यानप्रपञ्चितपरमशिवपुरप्राप्तिरूपत्वसिद्धौ 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी'ति । गीतोक्तन्यायेन तस्य साक्षात् परमशिवप्रसादैकलभ्यतया वचनान्तरैकार्थ्येन तस्य स्वस्थानाच्चलनस्यावश्यकल्प्यत्वात् । ननु, कठवल्लीषु 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमी'ति मुमुक्षुप्राप्यपदनिरूपणं प्रस्तुत्य 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि'त्युपसंहारात् मुमुक्षुप्राप्यं वैष्णवं पदमित्यवसीयत इति चेन्न । एषां मन्त्राणां 'येयं प्रेत' इत्यादिजीवस्वरूपप्रश्नोत्तरमध्यपातितया जीवात्मभूतब्रह्मविषयत्वेनानुमानिकाधिकरणे भगवत्पादैर्निपुणतरं व्यवस्थापितत्वेन 'तद्विष्णोः परमं पदमि'त्यस्य वैकुण्ठादिरूपवैष्णवस्थानपरत्वायोगात् । सगुणब्रह्मवादे तु उक्तन्यायेन 'सोऽध्वनः पारमाप्नोती'ति षडध्वातीतत्वलिङ्गेन च परमशिवस्थानपरत्वस्य वक्तव्यत्वात् । निरुक्तं हि शिवेऽपि विष्णुरिति नामाथर्वशिखायां—'सर्वे देवास्संविशन्तीति विष्णुरि'ति तत्र 'व्यापनाद्व्यापी महादेव' इति महादेवपदेन संज्ञिन उद्देशात् शिवसंज्ञानिर्वचनमिति स्पष्टम् । केचित्तु विष्णोरित्यस्य नारायणपरत्वं स्वीकृत्यैव पञ्चम्यन्तत्वं वदन्ति । नन्वापस्तम्बसूत्रे द्विजातीनामपवर्ग इति अपवर्गफलकत्वं ब्रह्ममेधस्योपक्रम्य 'वेष्टितुं पुरुषोत्तममि'त्युक्तम् । पुरुषोत्तमशब्दश्च विष्णावसाधारणः । 'हरिर्यथैकः पुरुषोत्तम'इति प्रसिद्धेः । तथा च ततो विष्णुप्राप्तिरेवापवर्ग इत्यवसीयत इति चेन्न । तस्य रूढ्या असाधारण्येऽपि योगेन साधारण्यात् । 'अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्तत' इत्यन्यत्रापि प्रयोगात्, 'उत्तमः पुरुषस्त्वन्य' इति गीतासु ईश्वरे तदीययौगिकार्थस्य भगवता दर्शितत्वाच्च । ननु च रूढिर्योगात् प्रबलेति चेन्न । 'स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति छान्दोग्ये अपवर्गप्राप्यरूपे उत्तमः पुरुष इति यौगिकार्थपरशब्दस्य प्रयोगेण सूत्रस्थपुरुषोत्तमपदप्रयोगस्यापि कल्पनालाघवाय तन्मूलत्वस्य वाच्यतया मूलानुसारेण इह योगस्यैव प्राबल्यात्, पूर्वोक्तन्यायैः इह रूढ्यसम्भवाच्च । यदत्र रामानुजादयः प्राहुः—तत्तद्विद्याप्रकरणश्रुतोपास्यपरपरब्रह्मपरमात्मशिवाक्षरशम्भ्वादिशब्दैस्सकलपरविद्योपास्यं वस्त्वनूद्य नारायणानुवाकवाक्यैः तस्य नारायणत्वविधानात् तत्तत्परविद्योपास्यं परब्रह्मादिशब्दोदितं वस्तु नारायण इति निश्चीयते । परविद्याश्च मुक्त्यर्थाः । तथा च मुक्त्यर्थसकलपरविद्योपास्यो नारायण

एव मुक्तिप्रद इति युक्तमिति । अत्र ब्रूमः — एवंसति 'यदा तम' इतिमन्त्रे य-देति सौबालवाक्यसिद्धकालविशेषप्राप्ततमोऽनुवाद इति मन्यमानानां तेषां कथं सुबालोपनिषदः शिवपरत्वं न सिध्येत् । तत्र तंश्रुत्तयोगेन तत्कालवर्तिनस्तमोऽधिष्ठातुस्सुबालोपनिषत्प्रतिपाद्यस्य शिवत्वविधानस्य इतोऽपि स्पष्टत्वात् । धीराः पश्यत पाण्डित्यं प्रतिपाद्यानुवाद्ययोः[1] । बलाद्व्यत्यस्थितिं मूर्खा जल्पन्ति स्वमताग्रहात् । अपि चैवं 'सर्वो वै रुद्र' इत्यादिमन्त्राणां त्वदुक्तरीत्या सर्वपुरुषसन्महःप्रभृतिशब्दैः शाण्डिल्यविद्यापुरुषसूक्तसद्विद्याऽयाऽद्धतिविद्यादिसकलपरविद्योपास्यवस्त्वनुवादेन तस्य वाक्यैरुद्रत्वविधायकत्वस्याभ्युपगन्तव्यतया कथं नारायणस्सर्वविद्योपास्य इति निर्णयः । बलाबलविचारे तु 'सर्वो वै रुद्र' इत्यादिमन्त्रैः रुद्रस्सर्वपरविद्योपास्यस्सिध्यतीति निर्णय एव युक्तः । 'सर्वो वै रुद्रः, पुरुषो वै रुद्र' इत्यादिवाक्यानां स्पष्टभेदानां सर्वपुरुषाद्यनुवादेन रुद्रत्वविधायकत्वस्य स्पष्टत्वात् । 'सहस्रशीर्षं देवमि'त्यादिमन्त्राणां 'तद्विश्वमुपजीवती'ति नारायणस्य विश्वोपजीव्यत्ववर्णनेन तत्प्रशंसापरतया प्रतीयमानानां तत्रतत्र वाक्यभेदस्य द्वितीयानां प्रथमार्थत्वस्य च कल्प्यतया सहस्रशीर्षाद्यनुवादेन नारायणत्वविधिपरत्वकल्पनस्य क्लिष्टत्वात् । तस्मात्सप्तविंशश्लोकोक्तरीत्या शैवदहरविद्याप्रकरणे तत्प्राशस्त्यख्यापनाय तदनुष्ठातृनारायणप्रशंसापरा इमे मन्त्राः । 'प्रकरणे चासम्भवन्नपकर्षो न कल्प्येते'ति न्यायादिति नैभिर्नारायणस्य सकलपरविद्योपास्यत्वसिद्धिः । तस्मादुक्तरीत्या देवतान्तरभजनाच्छिवभजनस्योत्कर्षो वज्रलेपायते । अत एवानुशासनिके श्रीकृष्णवचनं—'नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिरि'ति । ननु, गीतासु 'ईश्वरस्सर्वभूतानामि'ति शिवं प्रस्तुत्य 'तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् । इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया । विमृश्य तदशेषेण यथेच्छसि तथाकुरु ॥' इत्यन्तेन मुक्तिफलकं तद्भजनं विधायानन्तरं 'सर्वगुह्यतमं भूयश्शृणु मे परमं वचः ।' इत्यारभ्य 'मन्मना भव मद्भक्त' इत्यादिना विष्णुभजनं ततोऽप्युत्कृष्टं विधीयत इति प्रतीयते, उच्यते— श्रुतार्थश्रवणावृत्तिपरभूयश्शब्दस्वारस्यात् 'मन्मना भवे'ति श्लोकेन बहुशः पूर्वं प्रतिपादितार्थस्य वर्णनात् 'मामेकं शरणं व्रजे'त्यस्य 'तमेव शरणं गच्छे'त्यवधारणविरोधेन ईश्वरातिरिक्तभजनविधिपरत्वायोगात्, ईश्वरे कृष्णस्यास्मच्छब्दोपपत्तेः गीतायाश्शिवपरत्वोपपादनस्थले प्रदर्शितत्वाच्च । 'गुह्यतममि'त्यादि बुद्धिसौकर्याय संगृह्य प्रागुपवर्णितसकलार्थसारोपसंहारपरमिति नात्र कृतचोद्यावकाशः । यत्तु वै-

1- पुरोवादानुवादयोः इति पाठान्तरम् ॥

ऽणवतन्त्रानुसारिणां व्याख्यानं 'यथेच्छसि तथा कुर्वि'त्यन्तेन भगवान् कर्मज्ञानभक्तियोगानपवर्गफलकानुपदिश्य तच्छृण्वतोऽर्जुनस्य विषादं पश्यन् पूर्वं प्रपञ्चितानुष्ठेयसाकल्यसङ्कलनासामर्थ्येन तेषां दुष्करत्वबुद्ध्या वा विषाद इति विवेक्तुं प्रथमं पूर्वप्रपञ्चितानर्थान् सङ्कलय्य दर्शयित्वा पुनरपि तस्य तदवस्थं विषादं पश्यन् परमकारुणिकस्सर्वेभ्यो लघुतरं 'मुमुक्षुर्वै शरणमहं प्रपद्य' इति श्रुतिसिद्धं शरणागत्याख्यं पाञ्चरात्राभिहितं प्रपदनं कर्मज्ञानभक्तियोगनैरपेक्ष्येणापवर्गसाधनं 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजे'त्यादिना उपदिश्य 'मा शुच' इति तस्य विषादमपनीतवानित्यादि, तत्राप्युदाहृतमूलश्रुतेश्शिवपरत्वस्याद्यमङ्गलश्लोके व्यवस्थापनात्, शैवशास्त्रेष्वपि बहुशश्शरणागतिविधिसद्भावेन वैष्णवतन्त्रैरर्थनियमन्यायोगाच्च 'सर्वधर्मानि'त्यादेश्शिवप्रपत्तिविधिपरत्वमेव सिध्यतीति दिक् । नन्वस्त्वेवैवं, मोक्षधर्मगतस्य 'ब्रह्माणं नीलकण्ठं च याश्चान्यास्सर्वदेवताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ।' इति वचनस्य का गतिरिति चेत्, स्मर तावदिदमुक्तं—मुक्तिः परमपुरुषार्थः । तत्र एको बोध एवोपायः । देवताभजनानि तु बुभुक्षुकृतानि तत्तद्देवतावाप्तिपर्यन्तफलप्रदानि, मुमुक्षुकृतानि सूतसंहितादिदर्शितया प्रणाड्या मुक्त्यनुकूलानीति । तथा च प्रतिबुद्धा उत्पन्नब्रह्मसाक्षात्काराः सामान्यतो विशेषतश्च गृहीतान् सर्वान् देवान् न सेवन्ते, यस्मात् सेवाफलमात्रं परिमितं वैषयिकभोगरूपत्वात् परिच्छिन्नमपरिच्छिन्नब्रह्मानन्दामृतजलधिवेलोपगतान् उत्पन्नसाक्षात्कारान् प्रतीति तदर्थः । ज्ञाने सिद्धे तदर्थमपि न सेवन्त इति तद्भावः, न तु विष्णवतिरिक्तान् देवान् प्रतिबुद्धा न सेवन्त इति । 'याश्चान्या' इत्यन्यश्रुतेर्विशिष्य गृहीतेतरसर्वदेवताग्राहिण्याः सङ्कुचितवृत्त्यापादकप्रबलप्रमाणादर्शनात् । 'अतो वेदनपर्यन्तं भक्तिध्यानं जपार्चनमि'त्यादिपराशरादिवच नैर्देवतार्चनमात्रस्य ब्रह्मज्ञानपर्यन्तत्वस्य स्पष्टं प्रतिपादितत्वाच्च । किञ्चास्य श्लोकस्य विष्णुभजनाधिक्यप्रतिपादकत्वेऽप्युदाहृतानेकप्रमाणविरोधे तत्प्रशंसामात्रपरत्वात् न कश्चिद्दोषः । सन्ति ह्येतादृशानि परस्सहस्राणि शिवभजनोत्कर्षपराणि । किं बहुना । शिवभजनोत्कर्षज्ञापनायैव नारायणोऽपि शिवार्चनं करोतीति भारतादिषु सिद्धम् । एतेनान्यान्यप्येवंजातीयकानि 'न बुद्धिभेदं जनयेदि'ति न्यायेन श्रोतृबुद्ध्यनुसारादिना प्रवृत्तानि वचनान्तराणि व्याख्यातानि । तस्मान्न देवतान्तराराधनस्य शिवाराधनादुत्कर्षकल्पना युक्तिमती । ननु, मा भूदुत्कर्षः ततः, विष्णुभजनस्य साम्यं तु स्यात्, स्मृतिपुराणेतिहासकल्पसूत्रादिषु तयोरर्चनादिविकल्पप्रतिपादनादिति चेत्, तर्हि 'अथ गृहस्थो ह्यहरहरिष्टान् देवानिष्टाभीष्टार्थाश्चिनोति । ते च देवाः गणपतिर्वा

स्कन्दो वा सूर्यो वा सरस्वती वा गौरी वा गौरीपतिर्वा श्रीर्वा श्रीपतिर्वा ते च यथारुचि (*) समस्ता वेज्यन्त' इत्यादिबह्वृचगृह्यादिदर्शनाद्देवताभजनानां क्वचिदपि विशेष एव न सिध्येत् । यदि च विशेषवचनानुरोधात् तस्याविवक्षितविशेषफलसामान्याभिप्रायेण विकल्पपरत्वं , तर्हि प्रकृतेऽपि तथास्तु । नन्वस्त्वेवं शिवविष्ण्वादिकर्मभक्तियोगानां फलतो विशेषः,तद्विषयाहङ्ग्रहोपासनारूपस्य ध्यानयोगस्य तद्विशेषोऽयुक्तः । 'विकल्पोऽविशिष्टफलत्वादि'ति मुक्त्यर्थानां सगुणोपासनानां विकल्पं सूत्रयता सूत्रकारेण कण्ठतः फलाविशेषोपदर्शनादिति चेत् , उच्यते— 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत् परित्यज्ये'ति सर्वेतरदेवतावैमुख्येन शिवध्यानकर्तव्यतां मुखत एव उपदर्शयन्त्या श्रुत्यैव शिवध्यानस्य सर्वोत्कर्षप्रत्यायनात् न देवतान्तरध्यानानां तत्साम्यवचने प्रामाणिकानां रसना प्रवर्तते । 'सर्वमन्यत् परित्यज्ये'ति कर्मयोगादिकं परित्यज्य ध्याने स्थातव्यमिति उपदिशन्तीयं श्रुतिः 'तपस्विभ्योऽधिको योगी'त्यादिस्मृतिवत् कर्मयोगादिभ्यो ध्यानयोगस्य उत्कर्षप्रतिपादने पर्यवसिततात्पर्या न देवताविशेषग्रहणे भारं करोतीति शङ्कापि चमसाधिकरणन्यायविदां न हृदयमधिरोहति । न चात्र विषयोपसर्जनध्यानात् अन्यत्कर्मयोगादिकं 'सर्वमन्यदि'त्यनेनोच्यते । तस्य प्राधान्येन निर्दिष्टशिवेतरसकलदैवतजातपरत्वौचित्यात् । नाप्यत्र ब्रह्मकोट्यन्तर्गतमूर्तिविशेषव्यतिरिक्तेषु अग्न्यादिषु सर्वमन्यदित्यस्य संकुचितवृत्तिकल्पनं युक्तम् । सर्वेषामन्येषां परित्याज्यत्वोपपत्तिप्रदर्शके 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त' इति पूर्ववाक्ये ब्रह्मादीनां विशिष्य ग्रहणेन तेषु सर्वमन्यदित्यस्य वृत्तेरावश्यकत्वात् । यत्तु सूत्रमुदाहृतं, तदपि सगुणपरविद्यानां नोद्देश्यफलाविशेषप्रतिपादनपरम् । मुक्तेर्निर्गुणविद्याफलत्वात् अन्यत्र च सम्भवदुत्कर्षापकर्षफले तत्तदुपास्यगुणोपचयापचयकालदैर्घ्यतदभावप्रयुक्तस्य तारतम्यस्यावश्यकत्वात् , किं तु भाष्योक्तरीत्या प्रयाणकालीनोपास्यसाक्षात्कारविशेषपरमिति न विरोधः । तस्मादभ्युदयेषु सर्वोत्कृष्टफलप्रापकत्वात् निश्रेयसे सर्वतोऽन्तरङ्गत्वाच्च फलार्थिनामिति शिवाराधनमेवाभ्यर्हितमिति सिद्धम् ॥६०॥

एवं शिवस्य प्रत्यवायपरिहाराभ्युदयानिश्रेयसार्थिसकलकर्माधिकृतप्राणिबृन्दसेव्यत्वं व्यवस्थाप्य तत्सेवाविमुखान् कुमतावलम्बिनो दुर्भगांस्तान्त्रिकानुपालभते—

अवश्यं कर्तव्ये शिव तव समाराधनविधौ
अनायासाद्वाञ्छासमधिकफलस्पर्शनचणे ।
विहाय त्वां विश्वाधिक मृगयते देवमितरं
विमूढस्संवायै शिवशिव न लङ्घ्यो हतविधिः ॥६१॥

*. व्यस्तास्समस्ता इति पाठान्तरम् ॥

एवं किल तेषां दुर्भगानां प्रतिपत्तिः—यद्यप्यन्यदेवताविषया अपि भक्त्यर्चननमस्कारादिविधयस्सन्ति, तथाप्यन्यत्र सावकाशास्ते न नारायणप्रपन्नानधिकुर्वन्ति । 'नान्यं देवं नमस्कुर्याद्विष्णुपादाब्जसंश्रय' 'अनन्यदेवताभक्ता ये मद्भक्तजनप्रिया' इत्यादिभागवतवैष्णवधर्मशास्त्रादिविशेषवचनविरोधात् मोक्षधर्मादिषु भगवद्भक्तानामनन्ययजनस्य प्रतिपादनाच्च । तथा च भगवन्तं प्रपन्नैश्शिवनमस्कारादिकं न कर्तव्यमिति । तत्रेदमभिसंहितम्—एवं हि भगवत्प्रपत्तिविधायकत्वेन तदभिमतायां 'सर्वधर्मान् परित्यज्ये'ति 'तस्मात् त्वमुद्धवोत्सृजे'त्यादिस्मृतौ सर्वधर्मपरित्यागस्य तदङ्गत्वेन विधानप्रतीतेः विहितानुष्ठाननिषिद्धपरिहारादिलक्षणास्सर्वे धर्मास्तैः परित्यक्तव्या इति सुरगुरुमतधुरीणवदुत्पथवृत्तित्वमेव तेषां प्रसज्येत । इयांस्तु विशेषो लभ्यते—यल्लोकायतिकानां निषिद्धाननुष्ठाने तत्प्रयुक्तसुखालाभमात्रम्, तेषां तु स्वावलम्बितायाः प्रपत्तेरङ्गवैकल्यमपीति । अथ मतं पुरुषेण अवर्जनीयतया क्रियमाणेषु कर्मसु केषांचिद्धर्मत्वावश्यम्भावात् सर्वधर्मपरित्यागस्य सागरतरणवदशक्योपदेशतया उदाहृतस्मृतेस्सर्वधर्मपरित्यागस्य शरणव्रज्याङ्गत्वेन प्रतीयमानार्थे न तात्पर्यं, किं तु शोकनिवृत्त्यनुवादोऽयशोकोत्पत्तिनिदानमुक्त्युपायशून्यत्वाक्षिप्तपूर्वोपदिष्टकर्मज्ञानभक्तियोगरूपोपायान्तरानुष्ठानाशक्तौ । अशक्तिश्च त्यागशब्देन लक्षणयानूद्यते । तथा च सर्वधर्मान् परित्यज्य मा शुच इति व्यवहितयोजनायाम् उपायान्तराशक्तः परमपुरुषार्थप्राप्तौ विलम्बाक्षमतया तीव्रशोकः प्रपदनाधिकारी लभ्यत इति । एवं हि यदि 'नान्यं देवं नमस्कुर्यादि'त्यादित्वदुदाहृतस्मृतिः देवतान्तरनमस्कारत्यागस्य भगवत्प्रपत्त्यङ्गत्वविधिपरा, तदा वेदाधिकृतानां स्वस्वशाखान्तर्गतदेवव्रतशतरुद्रीयपञ्चब्रह्ममन्त्राध्ययनादिकालीनवाचिकशिवनमस्काराणामवर्जनीयत्वात् तत्त्यागाङ्गकायां प्रपत्तौ वेदबाह्योऽधिकारीति लभ्यते । तद्विधायकागमानामपि तदधिकारिकत्वस्य प्राग्व्यवस्थापनादिति न वैदिकानां शिवनमस्कारत्यागप्रसक्तिः । न च कायिक एव नमस्कारः, न नमश्शब्दोच्चारणमात्रमिति वाच्यम् । लोके वाचिकनमस्कारप्रसिद्धेर्निरालम्बनतापत्तेः, 'नमस्ते हरसे शोचिष इत्याह' 'नमस्कृत्य हि वसीयांसमुपचरन्ती'ति वैदिकलिङ्गविरोधप्रसङ्गाच्च बुद्धिपूर्वकदेवतान्तरनमस्कारवर्जनं वैदिकानामपि शक्यमिति चेत्, तथाभूतसर्वधर्मपरित्यागोऽपि शक्य इति तुल्यम् । अथोच्येत—नित्यविधिविहितानां वर्णाश्रमादिधर्माणां त्यागायोगात् सर्वधर्मान् परित्यज्येति प्रपदनाधिकारिविशेषणाशक्त्यनुवादकं, काम्यकर्मफलमुक्त्युपायान्तराद्यन्यतमत्यागविधायकं वेति कल्प्यत इति, न तर्हि शिवार्चननमस्कारादीनामपि त्यागो युज्यते । उप-

पादितं हि शिवाराधनस्य नित्यत्वमधस्तात् । 'पुरुषार्थप्रबोधे हि पूजायाः पार्वतीपतेः । नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् ॥' इत्युक्त्वातिक्रमे दोषश्रुतेरत्यागचोदनात् । फलाश्रुतेर्वीप्सया च नित्यत्वमुपपादितम् । स्फुटं तत्रैव तत्सर्वमिति नेह विलिख्यते ॥ वैष्णवातिरिक्तविषयत्वेन तत्सर्वं सावकाशमिति चेत्, तर्हि वर्णाश्रमादिधर्मविधानमपि तथा सावकाशमिति न 'सर्वधर्मानि'त्यादेरपि अर्थान्तरं कल्पनीयं स्यात् । अथापि स्यात्—भगवच्छास्त्रेषु वैष्णवानधिकृत्यैव नित्यकर्मणामत्यागविधानात् न तेषां तत्त्यागो युक्त इति, तर्हि स्कान्दे भृगुशौपाध्याये कौर्मादिषु च तानेवाधिकृत्य शिवार्चननमस्कारशिवभक्तिपूजादीनामत्यागस्य बहुशो विधानात् तत्त्यागिनां पाषण्डत्वप्रतिपादनाच्च शिवार्चनत्यागोऽपि न युक्तः । कथं च सर्वथा शिवाराधनत्यागे पाकयज्ञादिसंस्थानिर्वाहः । साकमेधीयत्र्यम्बकहविरीशानबल्यादीनामपि त्यक्तव्यत्वापत्तेः । तत्तद्देवतोद्देशेन विहितानां कर्मणां सर्वान्तर्यामी नारायण एव भोक्तेति न तेषां त्याज्यतेति चेत्, तर्हि तव किमपराद्धमकरणे प्रत्यवायपर्यवसायिना शिवार्चनादिना । वस्तुतस्तु तत्तद्देवतोद्देशेन विहितानि कर्माणि तत्तद्देवताभोक्तृकाण्येव । अन्यथा तत्तद्देवतानां यज्ञभागप्रार्थनाद्यर्थवादानामत्यन्तपारार्थ्यापत्तेः । परब्रह्मणस्सर्वकर्मभोक्तृत्ववचनानि तस्य सार्वात्म्यादुपपद्यन्ते । अत एव सृष्टिप्रकरणे वाजसनेयश्रुतिः—'तद्यदिदमाहुरमुं यजामुं यजेति एकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा' इति देवतान्तरोद्देशेन क्रियमाणानामपि कर्मणां तन्नियोगनिर्वर्तनरूपत्वात्तदाराधनरूपत्वं च सङ्गच्छते । राजनियोगात् कुमारामात्यादिपरिचरणस्येव राजसेवारूपत्वम् । अत एव 'फलमत उपपत्तेरि'ति सूत्रसिद्धं तस्य सर्वकर्मफलप्रदत्वं न विरुध्यते । एवं च यद्वालिशानां वैष्णवधर्मत्वेनाभिमतं नान्ययजनं, तत् यदि तत्तत्कर्मान्वयितया श्रुतानामन्यदेवानामयजनमेव, तदा तेषां वर्णाश्रमधर्माणां त्यक्तव्यतापत्तिर्वज्रलेपायते । यदि च तदविरोधेन स्वतन्त्रान्यदेवतानियोगाननुष्ठानरूपं, तदा सकलकर्ममर्यादाप्रवर्तकश्शेषी परमात्मा यदि नारायणादन्यः, तदा तेषां वैदिककर्मानुष्ठानेनोक्तरूपमनन्ययजनं सिध्यतीति तत्त्याग आवश्यकः । यदि तु स एव, तदान्येषामप्यनन्ययजनमविशिष्टम् । अभिसन्धिविशेषाद्विशेषोऽस्तीति चेत्, तत्ताद्विरुद्धाभिसन्धिमतामभिसन्धेरेव भ्रमत्वेन कर्मणां भगवन्नियोगरूपत्वानपायात् । न हि दोषप्रयुक्तात् पुरुषाभिसन्धिमात्रात् वस्त्वन्यथाभावः । विरुद्धाभिसन्धिपूर्वककर्मत्याग एवानन्ययजनमिति चेत्, न । विशेष्यात्यागात् । विशेषणमात्रत्यागस्तदिति चेन्न । सञ्जातभ्रमाणां वैष्णवदीक्षाप्रवेशेऽपि तत्त्यागस्याशक्यत्वात्, तन्निवृत्तये विशेषदर्शनादरणे

प्रपन्नस्य ज्ञानयोगसापेक्षत्वापातात् अशक्ताधिकारत्वहानेः । तस्माद्देवतान्तरत्यागो वैष्णवानां धर्म इति प्रलापो निरर्थकः । अपि च सर्वकर्मणां मर्यादाप्रवर्तकस्तद्द्वाराध्यस्तत्फलदाता च शिव एवेति दर्शितमधस्तात् । व्यवस्थापितं च निपुणतरं श्रुतिसूक्तिमालायाम् । तथा च देवतान्तरत्यागे सर्वकर्मणामवश्यं त्यक्तव्यत्वापत्तिर्वज्रलेपायते इत्यलमलक्ष्यलक्ष्यीकरणेनेति ॥

एवं मूर्खाणां शिवभजनवैमुख्यस्य पापपरिपाकरूपत्वं प्रदर्श्य तद्वैमुख्यस्य पापसाध्यत्वे दृष्टद्वारोपन्यासेन तदेव दृढीकृत्य स्वस्य शिवभजनैकान्त्यसम्पादनेन सकलभयसंतारकस्य निरतिशयपुरुषार्थरत्नाकरस्य बोधस्य स्थैर्यं प्रार्थयते—

भ्रमाल्लोभान्मोहान्मतदुरभिमानादपि मुधा
नयन्त्यायुर्नाशं शिव तव पदाम्भोजविमुखाः ।
वयं तावत्सर्वे सहसुतकलत्रादिभिरिमे
भवामस्ते दासा इति मतिरियं मेऽस्तु सुदृढा ॥६२॥

भ्रमः शास्त्रसिद्धदेवतापरापरभावादिविपर्ययज्ञानं, मोहः तदज्ञानं, लोभः कुमताभिमानिधनिकसंप्रीणनेनोदरभरणदुराशा , मतदुरभिमानः प्राक्स्वीकृतकुमतदुराग्रहः । अपिशब्देन प्राचीनदुर्वासनानुवृत्तिव्याजाशिवद्वेषादिकं समुच्चीयते । शिवदास्यस्यानादिसिद्धत्वेनाप्रार्थनीयत्वात्तन्मतिस्थैर्यमेव प्रार्थितम् ॥ ॥

अथैवमारचितं स्तोत्रमुपहारमालारूपेण भगवत्पादाम्बुजयोस्समर्पणेन भगवन्तं प्रसादयन्नेतत्स्तोत्रप्रचारमुपायनमुखेन प्रार्थयते—

इति विरचिता पद्यैष्षष्ट्या पदाम्बुरुहद्वये
तव शिखरिणीमाला लीलाकिरात समर्पिता ।
अनुदिनमिमामित्थं धन्यस्सकृत्पठति प्रभो
तव स लभतां साकं कुल्यैः कटाक्षकृपामृतम् ॥६३॥

अथैवं स्तोत्ररचनायां मन्दमतेर्भ्रान्त्यादिकृतस्य तत्त्वार्थे स्खालित्यस्यावर्जनीयत्वादपचारः प्राप्त इति भीतस्तदपनयनार्थमाह—

क्वाहं मूढः क्व तव महिमा निर्जरैरप्यमेयः
स्तोत्रव्याजादयमपि महान् केवलं मेऽपचारः ।
किन्तु स्वामिन् सदसदपि वा भक्तिपूर्वं कृतं यत्
भक्तिग्राह्यस्तदखिलमपि क्षाम्यसीति भ्रमोऽयम् ॥६४॥

वेदाहमेतमिति यन्महिमावबोधं
नारायणस्य भगवाननवदत् स्ववाचा ।
स्वस्यातिगौरवकरं तमशेषमूलं
कोऽन्यः परं शिवमिहार्हति नाम बोद्धुम् ॥

सदाशिवपदाम्भोजसक्तधीरप्पदीक्षितः ।
समग्रहीत्समस्तं तत् सारमित्थं त्रयीगिराम् ॥

विभक्तार्थं विश्वेश्वरमहिमपारायणमिदं
गभीरैर्मीमांसाद्वयनयनिबन्धैस्सुघटितम् ।
धिया किंचित् पूर्वापरनयविचारावहितया
विचिन्वन्तस्सन्तस्सुचिरमनुगृह्णन्तु विबुधाः ॥

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिः
अस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥

इति सर्वतन्त्रस्वतन्त्रश्रीमदप्पयदीक्षितकृतौ शिखरिणीमालाव्याख्याने शिवतत्त्वविवेके श्रीसदाशिवस्य विश्वसेव्यत्वव्यवस्थापनपरिच्छेदः ।

॥ सम्पूर्णोऽयं ग्रन्थः ॥

॥ ॐ ॥

---

